# शोधकर्ता कार्यकर्ता

मूललेखकः - श्री. मुकुल कानिटकर
संस्कृतानुवादकः - डॉ. जयवन्त चौधरी



कविकुलगुरु-कालिदास-संस्कृत-विश्वविद्यालयः
रामटेकनगरम् (महाराष्ट्रराज्यम्)

# शोधकर्ता कार्यकर्ता

मूललेखकः
श्री. मुकुल कानिटकर
संस्कृतानुवादकः
डॉ. जयवन्त चौधरी





कविकुलगुरु-कालिदास-संस्कृत-विश्वविद्यालयः
रामटेकनगरम् (महाराष्ट्रराज्यम्)

# शोधकर्ता कार्यकर्ता

(विश्वविद्यालयेन 22, 23 जून दिनाङ्कयोः 2018 आयोजिते संशोधनविषयक–द्विदिवसीय–राष्ट्रियचर्चासत्रे प्रकाशितः संस्कृतानुवादः)


**मूललेखकः**

**श्री. मुकुल कानिटकरः**

भारतीयशिक्षणमण्डलम्, भारतम्

**संस्कृतानुवादकः**

**डॉ. जयवन्त चौधरी**

सहायकप्राध्यापकः, व्याकरणविभागः

कविकुलगुरुकालिदाससंस्कृतविश्वविद्यालयः, रामटेकम्

# शोधकर्ता कार्यकर्ता

**मूलहिन्दीलेखकः – श्री. मुकुल कानिटकरः**

**संस्कृतानुवादकः – डॉ. जयवन्त चौधरी**

**संपादकौ**
**आचार्य मधुसूदनः पेन्ना**
**डॉ. परागः जोशी**



**प्रकाशकः**
**कुलसचिवः**
**कविकुलगुरुकालिदाससंस्कृतविश्वविद्यालय,**
**रामटेकम्–441106**

**प्रकाशनवर्षम् – 2018**

**आवृत्तिः – प्रथमा**

ISBN No. 978-93-85710-12-4

**मूल्यम् – 80/–**

**मुद्रकः – अवधूत ग्राफिक्स ॲण्ड प्रिन्टींग, नागपूर**

26. क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप ।।भगवत्गीता 2.3

27. **डॉ. हेडगेवार, डॉ. केशव बळीरामपंत हेडगेवार**– राष्ट्रीयस्वयंसेवकसंघस्य संस्थापकः तथा आद्य सरसंघचालकः ।

28. **विंस्टन् चर्चिल्**– (30 नवम्बर 1874 तः 24 जनवरी 1965 पर्यन्तम्) द्वितीयविश्वयुद्धकाले (1940–1945) ''इंग्लंड'' इति देशस्य प्रधानमन्त्रिः, प्रसिद्धः कूटनीतिज्ञः, प्रखरवक्ता च, सेनायामाधिकारी, इतिहासकारः, लेखकः कलाकारश्च नोबेल इति पुरस्कारेण सम्मानितः एकमात्र प्रधानमन्त्रिः।

29. **डॉ. मारोति पवार**–सचिवः, विदर्भप्रान्तम्, भा.शि.म.

30. **श्री रविन्द्र भुसारी**–राष्ट्रीयस्वयंसेवकसंघस्य वरिष्ठप्रचारकः एवं 2017 वर्षपर्यन्तं ''भाजपा'' इति दलस्य महाराष्ट्रगोवाप्रदेशस्य संगठनमन्त्रिः।

31. **डॉ. मोहनमधुकरभागवत**– राष्ट्रीयस्वयंसेवकसंघस्य षष्ठः सरसंघचालकः।

32. **बाजीप्रभुदेशपाण्डे (1615–1660)**

शिवाजीमहाराजस्य युद्धसेनायाम् उच्चपदाधिकारी आसीत् ।स्वराजस्य विस्ताराय अनेन महाराजस्य अविरतसहायता कृता । ई.स. 1660 तमे वर्षे मुगलैः, आदिलशाहसिद्दीकीत्यादिभिः शिवाजीमहाराज सर्वतः आवृतः ।पन्हालादुर्गात् निर्गमनं तेषां कृते अतीव कठिनमासीत् ।तदा बाजीप्रभुदेशपांडे वीरेण शिवाजी महाराजाय सेन्यं दत्त्वा स्वयं ''घोडघाटी'' महाद्वारं रक्षितम् ।घण्टाचतुष्टयं यावत् दुर्धरं युद्धं सञ्जातम् ।युद्धे बाजीप्रभूना वीरतायाः परिचयः प्रदत्तः ।तस्य अग्रजेन फुलाजीवर्येण अस्मिन् युद्धे वीरगतिः प्राप्ताः ।सेनायाः अतीव हानिः अभवत्।आर्तावस्थायामपि बाजीप्रभुः सेनायाः प्रोत्साहनं वर्धितवान् ।यदा शिवाजी महाराजः दुर्गं प्राप्तवान् तदा ''तोप'' इति युद्धयन्त्रस्य शब्देन महाराजेन दुर्गे सकुशलप्रवेशस्य संकेतः प्रदत्तः । ''तोप'' इति युद्धयन्त्रस्य शब्दं श्रुत्वा ''स्वामी सुरक्षितः'' इति सन्देशं प्राप्य बाजीप्रभुणा स्वकर्तव्यं पूर्णं कृतम् ।तथा च जुलाईमासस्य 1660 ई. तमे वर्षे अनेन वीरेण अमरत्वं प्राप्तम्।

33. **डॉ. दत्तात्रय वाटमोडे**–सचिवः विद्यापीठ शिक्षणमञ्चम् ।

16. **श्री उमाशंकर पचौरी**— हिन्दी विषयस्य प्राध्यापकः, बहुमुखी लेखकः वक्ता च, रामायणं महाभारतमेवं पारम्पारिकज्ञानप्रणाल्याः विशेषज्ञः, भारतीयशिक्षणमण्डलस्य संयुक्तमहामन्त्री।

17. **डॉ. गौरव त्रिवेदी**— प्राध्यापकः आय.आय.टी. गुवाहाटी

18. **श्री. जितेन्द्र वझे**— एम.ए. संस्कृतम् (लब्धस्वर्णपदकः) जीवाजी विश्वविद्यालयः ग्वालियरम्, कन्याकुमार्यां विवेकानन्दकेन्द्रे द्वादशवर्षाणि पूर्णकालीनकार्यकर्तारूपेण कार्यम्, योगविद्यायां प्रारंगतप्रशिक्षकः, भारतीयशिक्षणमण्डलस्य प्रकाशनविभागे सहप्रमुखः।

19. **डॉ. वामन गोगटे —** सेवानिवृत्तः प्रधानाध्यापकः बी.एड. महाविद्यालयः, नैकानां पुस्तकानां लेखकः,NCERT सदस्यः, भारतीयशिक्षणमण्डलस्य महामन्त्रिः तथा च मण्डलद्वारा प्रकाशितस्य ''भारतीयशिक्षण'' इति मराठी मासिकस्य संपादकः।

20. **अखिलभारतीय – राष्ट्रीयशैक्षिकमहासंघः**— 1989 तमें वर्षे भारतीयशिक्षणमण्डलात् एव अस्य संगठनस्य पृथक् निर्माणं जातम् । इदं संगठनं विभिन्नराज्येषु प्राथमिकशिक्षातः उच्चशिक्षायाः वर्गशिक्षकानां संगठनस्य महासंघः वर्तते ।

21. **श्री माधव सदाशिव गोळवलकर उपाख्य गुरूजी**—राष्ट्रीयस्वयंसेवकसंघस्य द्वितीयः सरसंघचालकः।

22. सखेतिमत्वा प्रसभं यदुक्तं हे कृष्ण हे यादव हे सखेति ।
अजानता महिमानं तवेदं मया प्रमादात् प्रणयेन वापि ।।भगवत्गीता 11.41

23. आचार्याः पितरः पुत्रास्तथैव च पितामहाः ।
मातुलाः श्वशुराः पौत्राः श्यालाः सम्बन्धिनस्तथा ।।भगवत्गीता 1.34

24. अहो बत महत्पापं कर्तुं व्यवसिता वयम् ।
यत् राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ।।भगवत् गीता 1.45

25. कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ।। भगवत्गीता 2.2



# संपादकीयम्

विश्वविद्यालयाद्वारा आयोजिते द्विदिवसीय—राष्ट्रियचर्चासत्रे संशोधनपरे संशोधनविषयकं संस्कृतभाषोपनिबद्धं हिन्दीभाषातः संस्कृतेन अनूदितमिदं पुस्तकं प्रकाशयतामस्माकं प्रमोदो भवति यतः संस्कृतविषये संशोधनं भारतदेशस्य प्रतिष्ठायै भवति ।अस्माकं देशे आप्राचीनकालात् प्रवर्तितं संशोधनं सर्वथा महोत्कृष्टमासीदित्यत्र नास्ति संदेहः ।क्वचित् कालान्तरे जातानां परिणामानां कारणेन भारतीयसंशोधनस्य पुरोगतिः किञ्चिदिव कुण्ठिता अभवत् । तेन संशोधनं सर्वमपि पाश्चात्त्यमेव न किञ्चिदपि भारतीयमस्तीति काचिदपभावना भारतीयेषु पाश्चात्त्येषु च दृढमूला जाता । अधुना सा अपभावना उत्पाटनीया । अस्माभिरेव संशोधनस्य गुणाः आत्मसात् कर्तव्याः। उत्कृष्टं संशोधनम् अस्माकमेव सततप्रयत्नैरेव भवितुमर्हतीति नः दृढविश्वासः।

उत्कृष्टसंशोधनस्य स्वरूपलक्ष्यादिकं लक्ष्यीकृत्य आयोजितमिदं चर्चासत्रं सर्वथा प्रामुख्यं वहति, एतादृशे चर्चासत्रे श्रीमतो मुकुल कानिटकर महोदयस्य हिन्दीभाषोपनिबद्धस्य संस्कृतानुवादपुस्तकस्य प्रकाशनमपि सज्जीकृत्य संशोधनोन्मुखानां छात्राणामितरेषाञ्च उपयोगाय भवत्संमुखे विदधतो नः संपादकवर्गस्य महान् प्रमोदो भवति ।अस्य पुस्तकस्य प्रकाशानाय अनुमतिं प्रदत्तवते श्रीमते मुकुल महोदयाय भूरिशो धन्यवादाः ।अल्पकाले एव अपेक्षितरीत्या संस्कृतानुवादं सज्जीकृतवते श्रीमते जयवन्त चौधरी महोदयाय शुभकामनाः । उत्कृष्टसंशोधनस्य दिशि प्रवर्तितानामस्माकं प्रथमोऽयं चरणन्यासः विद्वद्भिः सहृदयैश्च सममेव अभिनन्द्येत। अस्मानस्मिन् कार्ये सोत्साहं प्रवर्तितुमावश्यकं प्रेरणञ्च दद्यात् इति भावयामहे ।

यत् प्राचीनमहर्षिभिर्भुवि तपःपुण्यात्मना साधितं
गीर्वाण्या प्रकटीकृतञ्च महितं विज्ञानरूपं धनम् ।

तद् रक्ष्यं सततोद्यतैः सुधिषणैः क्षेमाय वै भारतै
रित्यालोच्य महत् प्रकाशनमिदं सज्जीकृतं श्रद्धया ।।

**संपादकौ**

## गीर्वाणवाणी

विश्वशान्तिकामिनी जनप्रबोधगामिनी
सदार्यवर्यशुद्धचित्तपद्मिनीविलासिनी
नवीनकान्तिभासिनी प्रजामनःसुवासिनी
विराजतां विवर्धतां यशः स्थिरं समाप्नुताम् ।।

अनादिकालवाहिनी कणादशास्त्रगाहिनी
आर्यभट्ट–भास्करादि–शास्त्रकाररूपिणी।
ज्ञानमात्रनन्दिनी महार्थतत्त्वभासिनी
विराजतां विवर्धतां यशः स्थिरं समाप्नुताम्।।

समस्तविघ्नघातिनी विनीतपक्षपातिनी
अमेयशक्तिशालिनी सदर्थशास्त्रमालिनी
नवीनजन्मदायिनी बुधेन्द्रकीर्तिधायिनी
विराजतां विवर्धतां यशः स्थिरं समाप्नुताम् ।।

**आचार्यः मधुसूदनः पेन्ना**



9. ग्रीस–यूरोपीय–ऋण–संकटम् 2010 तमे वर्षे प्रारब्धम् । शनैः शनैः इदं संकटम् अन्यपाश्चात्यदेशान् अपि आच्छादयन् वर्तते । एतेषां देशानाम् अर्थव्यवस्थायाः हानि दिनानुदिनं वर्धन्ती वर्तते । यूनानदेशः 2015 तमे वर्षे दीनः अभवत् । अन्ये देशाः अपि दीनतायाः निकटे एव सन्ति । यूनान् – आयरलैंड– इटली – स्पेन – पुर्तगाल – इत्यादी देशेषु इदं संकटं प्रसृतम् एतेषां देशानाम् ऋणं दिनानुदिनं वर्धमानं वर्तते ।

10. **डॉ. पी. बी. कट्टीमनी –**इंदिरागांधी–राष्ट्रीयजनजातीय–विश्वविद्यालयः अमरकंटकस्य कुलपतिः, बहुमुखी लेखकः, संपादकश्च, हिन्दीविषयस्य प्राध्यापकः, भारतीयशिक्षणमण्डलस्य अनुसंधानप्रकोष्ठस्य सह–प्रमुखः

11. **अतिवृष्टिः (सुनामी)**–2004 तमे वर्षे दक्षिणभारते नागपट्टणम इति प्रान्ते 8.9 richter scale तीव्रतायाः भूकम्पः अभवत् यस्मिन् 1800 जनाः मृताः ।

12. **डॉ. राजेश बिनिवाले**–National Environmental Engineering Research Institute (NEERI) नागपुरस्य प्रमुखः वैज्ञानिकः (Principal Scientist), Research for Resurgence Foundation (RFRF) इति संस्थायाः संयोजकः ।

13. **Research for Resurgence foundation (RFRF) -** भारतीयशिक्षणमण्डलद्वारा निर्मितः न्यासः, यः देशहितार्थमेवं समाजोपयोग्यनुसन्धानं कर्तुं कार्यं करिष्यति । नागपुरे अस्य परिसरस्य निर्माणं भविष्यति । यस्मिन् विभिन्नविषयेषु अनुसन्धानं कर्तुं सप्तदशकेन्द्राणां निर्माणं भविष्यति । विभिन्नविश्वविद्यालयेषु अस्य विस्तारस्य शाखाः भविष्यन्ति । अयं न्यासः निजीसंस्थानेषु तथा विश्वविद्यालयेषु अनुसन्धानक्षेत्रे सूत्रबन्धनस्य कार्यं करिष्यति ।

14. **श्री एकनाथ रानडे (19 नवम्बरमासः 1914–22 अगस्तमासः 1980)** राष्ट्रीयस्वयंसेवकसंघस्य समर्पितकार्यकर्ता, 1926 वर्षात् एव संघस्य विभिन्नदायित्वानां निर्वहनम्, एकलेन एव कन्याकुमार्यां स्थितस्य विवेकानन्दशिलास्मारकस्य निर्माणाय आन्दोलनं प्रारब्धम् एवं सफलतापूर्वकम् अस्य स्मारकस्य निर्माणमपि कृतम् ।

15. **युवा – आयामः** – यूनां राष्ट्रहितस्य विषयानामनुसन्धानमेवं लेखनं वर्धयितुं द्वाभ्यां वर्षाभ्यां भारतीयशिक्षणमण्डलेन युवा–आयामः प्रारब्धः। यस्मिन् बौद्धिकयोद्धाः निर्मियन्ते । प्रत्येकप्रान्ते अस्य आयामस्य गतिविधयः भवन्ति एवञ्च नूतनलेखकानां निर्माणमपि भवति ।

# सन्दर्भग्रन्थसूची

1. **बाबा रामदेवः**– योगविद्यायाः ज्ञाता – आयुर्वेदराजनीतिकृषिव्यापारेषु योगदानम्। पतञ्जलि ग्रुप ऑफ इंस्टिट्यूशंस इत्यस्य संस्थापकः।

2. **विवेकानन्द इन्टरनेशनल फाउंडेशन**– विवेकानन्दकेन्द्रस्य तत्त्वावधाने भारतस्य अग्रणी सुरक्षाविशेषज्ञाणां समाजकर्तृणाम् उद्योगपतिनां परोपकारिणां च सहयोगेन दिल्लीनगरे प्रस्थापितमेकम् ''थिंक टैंक'' यस्य उद्देश्यं नूतनविचाराणां प्रारम्भाय उत्कृष्टताप्रदानम्, ते विचाराः एव वैश्विकविषयेषु भारतदेशाय सुदृढं सुरक्षितं समृद्धं च कर्तुं प्रथमस्थानं भजन्ति।

3. **डॉ.अजित डोभालः** – पूर्व भारतीय – गुप्तचरसंघटना एवं न्यायप्रवर्तन अधिकारी. पञ्चम् तथा वर्तमानभारतीयप्रधानमन्त्रिणां राष्ट्रीयसुरक्षासलाहकारः IBइत्यस्य पूर्व निर्देशकः

4. **डॉ. विलास सपकालः** – रसायनतन्त्रज्ञानस्य प्राध्यापकः, राष्ट्रसंत तुकडोजी महाराज नागपूर विश्वविद्यालयस्य पूर्वकुलपतिः, भारतीयशिक्षणमण्डलस्य विशेषामन्त्रितसदस्यः

5. **डॉ. अरविन्द जोशी**– समाजशास्त्रस्य प्राध्यापकः सद्यः कविकुलगुरु–कालिदाससंस्कृतविश्वविद्यालयस्य, कुलसचिवः RFRFइत्यस्य सचिवः, भारतीयशिक्षणमण्डलस्य संयुक्तमहामन्त्री

6. **डॉ. एस. गुरूमूर्ति**–उद्योगपतिः परामर्शदाता च, तमिलभाषायां प्रकाशितस्य 'तुगलग्' इति समाचारपत्रस्य संपादकः, चार्टर्ड अकाऊंटेट, विचारकः, स्वदेशी चिन्तकश्च।

7. **डॉ. ब्रजकिशोर कुठियाला**– माखनलाल–चतुर्वेदी पत्रकारिता एवं जनसञ्चारविश्वविद्यालयस्य कुलपतिः, भारतीयशिक्षणमण्डलस्य आमन्त्रितसदस्यः।

8. **मंडल–आयोगः**–भारते मंडल–आयोगः 1979 तमे वर्षे तत्कालीन–जनतादलस्य सर्वकारेण स्थापितः।अस्य आयोगस्य कार्यक्षेत्रं दलितानां सामाजिकार्थिकरूपेण प्रबोधनकरणम् आसीत्।



# अनुवादकस्य मनोगतम्

भारतीयशिक्षणमण्डलस्य श्रीमता मुकुल कानिटकर महोदयेन लिखितस्य शोधकर्ता–कार्यकर्ता इति हिन्दीग्रन्थस्य संस्कृतानुवादः 22, 23 जून दिनाङ्कयोः 2018 आयोजयिष्यमाणे संशोधनविषयक द्विदिवसीयराष्ट्रियचर्चासत्रे प्रकाशनीय इति निश्चयः अस्माभिः कृतो वर्तते। तच्च अनुवादकार्यं मा. पेन्ना महोदयानां मार्गदर्शने भवता साधनीयमिति मृदुमधुरगिरा माम् अबोधयन् मा. कुलगुरवः आचार्य श्रीनिवास वरखेडी महोदयाः।अवसरमिमं प्रदाय तैरुपकृतोऽहम् आत्मानं धन्यं मन्ये।सहसा कार्यमिदं मयि निहितमिति भावयन्नासम् किन्तु पश्चात् बुधजनसकाशादवगतं यत् मम प्रशिक्षणस्य इयं प्रात्यक्षिकी परीक्षा विद्यत इति।वस्तुतः मार्चमासे संस्कृतभारत्या बेङ्गलुरूनगरे लेखकानुवादकवर्गः आयोजितः आसीत्।तस्मिन् वर्गे भागग्रहणाय विद्यापीठपक्षतः मा. कुलगुरुमहोदयैः मम नाम सूचितम्।प्रशिक्षणं प्राप्य यदाहम् आगतः तदा ते स्वयं माम् आहूय प्रशिक्षणस्य अनुभवविषये पृच्छां कृतवन्तः। मयापि सानन्दं प्राप्तानुभवकथनम् अकारि। नूतनविषयाधिगमेन मम प्राप्तकौशल्यस्य ननु परीक्षणाय एव महोदयैः सपदि अनुवादकार्यमिदं मयि न्यस्तम्।आदौ ईषद् भयमभवत् यतः विद्यापीठे कनिष्ठेषु अध्यापकेषु अहम् अग्रगण्यः पुनश्च ग्रन्थस्य अनुवादकार्यस्य पूर्वानुभवोऽपि नासीत् अथापि महोदयानां मयि विश्वासं वीक्ष्य, अचिरात् प्राप्तमनुवादप्रशिक्षणञ्च मनसि दृढं निधाय कार्यमिदमारब्धम्।

*योजकस्तत्र दुर्लभः* इति वाक्यम् अस्मद् कुलगुरुणां विषये न प्रवर्तते इति तद्दिने अवगतम्।तेषां तीक्ष्णबुद्धिः सम्यग् गृह्णाति

व्यक्तिषु विद्यमानं कौशलम् । तस्य च सदुपयोगे निपुणाः इमे । समये समये मा. मधुसूदन पेन्ना महोदयानां मार्गदर्शने कार्यस्य सुष्ठु समीक्षणमभवत् । मम सार्वकालिकमित्रैः शन्तनु–पराग–दिनकर प्रभृतिभिः साह्यमाचरितम् । ममायमाद्यप्रयासः नूनं परिणतबुध्दीनामग्रे साहसमेव तथापि सुकुमारप्रयासोऽयं नन्दयतु सकलचेतांसि इति आशासे । यद्यत्र दोषा भवेयुः कृपया तान् सूचयन्तु इति सविनयं प्रार्थना । अस्मिन् कर्मणि साहाय्यमाचरितवद्भ्यः सर्वेभ्यः मम भूयो भूयो धन्यवादाः ।

**डॉ. जयवन्त चौधरी**
सहायक प्राध्यापकः
वेदव्याकरणविभागः,
क.का.सं.वि.,रामटेक



4) प्रकाशनम् – मराठ्यामाङ्गलभाषायाञ्च मासिकम्, हिन्द्यां त्रैमासिकम् । हिंदी, असमिया, तेलुगु, गुजराती, कन्नड़ तथा मराठ्यां विविधानि पुस्तकानि ।

**संघटनम् –**

संघटनम् – देशस्य चत्वारिंशत् स्थलेषु भारतीयशिक्षण–मण्डलस्य शाखाः सन्ति । शिक्षणाभ्यासादिषु रुचिः येषां वर्तते तेभ्यः साप्ताहिकं ''मंडलम्'' आयोज्यते । 'विषयविशेषज्ञानं कृते ''अध्ययनसमूहस्य ''संघटनम् निर्मापणीयम् ।'' आजीवनं सदस्यता शुल्कम् 1000/– वार्षिकम् – 100/– रू. युवविस्तारः । युवजनेषु राष्ट्रभक्तेः राष्ट्रगौरवस्य भावना जागरयितुं तथा युवकानां प्रतिभायाः उत्साहस्य च राष्ट्रसमर्पणहेतुना भारतीयशिक्षणमंडलेन युवा आयामः प्रारब्धः ।

गुरुकुलप्रकल्पः– भारतीयशिक्षणमण्डलं मन्यते यत् गुरुकुलशिक्षाव्यवस्थाऽस्माकं देशस्य स्थापिता, सनातनी च व्यवस्था । वर्तमानकाले इयं पद्धतिः युगानुकूलतां प्राप्यमाना भविष्योन्मुखं स्वरूपमाधत्ते । पद्धतिरियं शिक्षाप्रपञ्चस्थानां सर्वासां समस्यानां परिहाराय सक्षमा वर्तते ।अतः भारतीयशिक्षणमण्डलम् आदर्शगुरुकुलं तथैव समाजोपयोगिनीं शिक्षाव्यवस्थां स्थापयितुं प्रयत्नरतं वर्तते ।

***

# भारतीयशिक्षणमण्डलम् – एकः परिचयः ।

"भारतीयशिक्षणमण्डलम्" इति शिक्षाव्यवस्थायां भारतीयतां प्रतिष्ठापयितुं प्रवृत्ता, कार्यरता अखिलभारतीया संघटना । शिक्षापद्धतिः, पाठ्यक्रमः तथा नीतिः इति भारतीयदृष्टया विषयत्रयम्, तत् विषयत्रयाधारितं संघटनम् । भारतकेन्द्रितं तथा भारतहिताय यद् भवेत्, तद्दश्ष्टया संघटनमिदं वैचारिकानां, शैक्षिकानां, व्यावहारिकविषयाणां विशेषकार्यक्रमाणां नियतरीत्या समायोजनं करोति । एतत् निमित्तेन मण्डलद्वारा, अनुसंधानं, प्रबोधनं, प्रशिक्षणं, प्रकाशनं तथैव सर्वेषां संघटनार्थं पञ्चप्रकारकः कार्यमार्गः विचारितः विकसितश्च वर्तते ।

1) अनुसन्धानम् – सर्वेषु विषयेषु भारतीयज्ञानपरम्परा तत्सहिता भारतीया विचारदृष्टिः इति मुखेन अनुसन्धानं प्रेरणीयम् । विश्वविद्यालयेषु अध्ययनसमूहानां संघटनं कर्तव्यम् इति । भारतीयतामाश्रित्य पाठ्यक्रमविनिर्मितिः ।

2) प्रबोधनम् – सभासम्मेलनकार्यशालादिमाध्यमेन नीतिनिर्धारकानां शिक्षकाणां, समाजस्य प्रबुद्धवर्गस्य च मध्ये भारतीयदृष्टेः जागरणम् ।

3) प्रशिक्षणम् – शिक्षकस्वाध्यायः अभिभावकोद्बोधनम् संस्थाचालकपरामर्शः इत्यादिसम्बद्धानां कार्यशालानामायोजनम् ।



# ।। पूर्वपीठिका ।।

भारतीयशिक्षणमण्डलम् इति संस्थाया: काचित् संगोष्ठी नागपूरनगरे षोडशोत्तरद्विसहस्रतमखिस्ताब्दे सम्पन्ना । अस्यां संगोष्ठयां पुनरूत्थानायानु सधानम् (रिसर्च फॉर रिसर्जन्स फाऊंडेशन) इत्यस्य प्रस्तावः व्यवस्थायां योजितः। तदनुसारेणैव प्रकल्पस्यास्य आरम्भः कृतो वर्तते । वस्तुतस्त्वयं प्रयत्नः भारतदेशे शोधस्य उपादेयतां गम्भीरताञ्च गमयितुमेव क्रियमाणः वर्तते । शोधविषये वर्तमानभारतीयसमाजव्यवस्थायां सामाजिकानां दृष्टिः भ्रान्ता वर्तते । अतस्तां भ्रमात्मिकां दृष्टिं तिरस्कर्तुं ग्रन्थेऽस्मिन् यत्नः कृतस्तद्विषये विचारश्च प्रवर्तितः वर्तते । अद्यतनीयायां शिक्षाव्यवस्थायां शोधकार्यम् उपाधिप्राप्त्यर्थं, पदोन्नत्यै, अर्हतासम्पादनाय वा क्रियमाणः प्रयासः इत्येव गम्यते । विश्वविद्यालयाः, महाविद्यालयाश्च अस्माकं शोधविषयस्य गाम्भीर्यं सुदूरं विन्यस्य शैक्षणिकं कर्मकाण्डमिव मन्यमानाः प्राचीनानर्थकपरम्परापालनपराः प्रतीयन्ते । विश्वविद्यालयनियमबाह्याः अस्माकं वैज्ञानिकाः समाजशास्त्रीयाश्च शोधाः केवलं

पाश्चात्त्यशोधावधारणानां पुनर्व्यवस्थापनस्य अथवा परिपोषणस्य साधनमात्रतामावहन्ति । तथ्यात्मकं शोधं न कुर्वाणा वयं पाश्चात्त्यानुकरणपराः एव जायमानाः स्मः।

पाश्चात्त्यानुसरणमेव महत् इति जनाः मन्यन्ते तदस्माकं दौर्भाग्यमेव ।अस्माकं शोधस्य का दृष्टिः भवेत्, किम् उद्देश्यं स्यात्, प्रासंगिकता का स्यात्, इत्येद्विषयकमालोचनमद्यतन काले महतीमावश्यकतामावहति ।

वयं जानीमः यदस्माकं भारतभूमिरियं प्राचीनकालादेव ज्ञानस्य केन्द्रस्थानमासीत् । समग्रेभ्यः अपि विश्वगतदिग्देशेभ्यः विद्यार्थिनः भारतमागच्छन्ति स्म । नालंदा, तक्षशिला, इत्यादि सदृशाः विश्वविद्यालयाः अस्मद्देशे आसन् येषु विद्यमानाः विश्वप्रसिद्धाः मनीषिणः आचार्याः ज्ञानस्यविभिन्नासु शाखासु पारंगताः आसन् ते छात्रान् दीक्षितान् कुर्वन्ति स्म । तत्काले सर्वमिदं सम्भवमासीत् यतो हि भारतभूमिः एव ज्ञानविज्ञानस्रोतमासीत् । एतदस्मद्वचः न केवलं कल्पनामात्रमपि तु तथ्यात्मकैः प्रमाणैः परिपोषितं वर्तते ।ज्ञानस्य नैकापि शाखा वर्तते यस्या चिन्तनमस्मन्मनीषिभिः आचार्यैः न विहितम् । इयं स्थितिः भारतेऽस्मिन् परम्परया एव सिद्धा अस्ति ।भारतीयज्ञानसम्पदः तावत् गाम्भीर्यमासीत् यत् सहस्रवर्षपर्यन्तं संघर्षकालं यापयित्वाऽपि तस्याः विच्छेदः नाभूत् ।परम्पराद्वयमक्षुण्णरूपेण प्रवहति ।

दुःखस्य विषयोऽयं, तत्परमागतेन ब्रिटिशसर्वकारेण शताधिकवर्षाण्येव राज्यं कृत्वा भारतीयज्ञानपरम्परेयं विध्वंसिता। तदाधारभूमिरेव विनाशिता ।अस्माकं विचारधाराऽपि तस्यां शिक्षापद्धतौ



तदा मातुः मुखात् एकैव शब्दः निर्गतः ''स्मर'' त्वं शिक्षकः ''कर्तव्यबोधः'' एकं लघुवाक्यम्! स्मर त्वं शिक्षकः यदि सदा सर्वदा स्मरणे अभविष्यत् त्वं शिक्षकः ''इति तदा स्वकर्तव्यस्य बोधः अभविष्यत्। तदा वक्रमार्गगमने तस्मिन् मार्गे पादक्षेपणे अपि भीतिः अभविष्यत् । यदि कर्तव्यबोधः सदा सर्वदा भविष्यति। तदा किं भयं तथा च अभयमेव मुक्तिः। यदि वयं कर्तव्यबोधतत्पराः भवामश्चेत् कोऽपि अस्मान् कुस्पर्शं कर्तुं न शक्नोति ।'' अहं कः ''इति कर्तव्यबोधः भवति चेत् जीवने आनन्दस्यानुभूतिः भवति ।

जीवनानन्दस्य कुञ्चिका अस्ति ''कर्तव्यबोधः'' तस्य सरलमार्गः वर्तते ''स्वदायित्वानां पूर्णतया निर्वहणम्।'' परिवारे समाजे, स्वदायित्वज्ञानम् । तथा च महत्त्वपूर्णम् एतस्याभ्यासं कर्तुं संघटने स्वदायित्वम् ।यदि संघटने स्वदायित्वानां निर्वहणं सुष्टुरूपेण कुर्मश्चेत् अस्माकं स्वदायित्वानां निर्वाहोऽपि सुष्टुतया एव भवति ।अतः वयं कर्तव्यवान् कार्यकर्ता, दायित्ववान् कार्यकर्ता भवेम । तथा च स्वजीवने कर्तव्यबोधस्यानन्दः तस्य सुरभिः सर्वत्र प्रसरेत् इति प्रार्थनया स्ववाणीं विरमामि ।

इति ।

***

अत्यन्तामावश्यकतामावहति ।राष्ट्रस्यास्याध्यापकः कर्तव्यबोधेन प्रेरितः भविष्यति तर्हि ''एक दीप से जले दूसरा'', ''दीपात् दीपान्तरं ज्वलति'', इति न्यायेन अध्यापकान् तथा छात्रांश्च प्रेरयिष्यति ।अस्माभिः एकेन दीपेन पञ्च दीपाः प्रज्वलिताः । किन्तु दीपः स्वयमेव प्रज्वलितः यदि नाभविष्यत् तर्हि अन्ये दीपाः, अन्यानि ज्योतिंषि कथं प्रदीप्तानि अभविष्यन्? अध्यापकः तं दीपं ज्वालयितुं प्रभवति यः छात्रहृदये वर्तते। किन्तु कदा ज्वालयिष्यति? यदा सः स्वपक्षतः शतप्रतिशतं सापेक्षबुद्धिं वक्ष्यति ।अन्येभ्यः किञ्चित् अपेक्षां कुर्वन् न। वयमात्मावलोकनप्रारम्भं कुर्मः ।अस्माकं कर्तव्यम्, मम उपपत्तिः का वर्तते?

आत्मानं प्रश्नं कुर्वन्तु – ''किमेतत् मयि शोभते? बहु सरलमिदं सर्वम् ।रात्रिसमये मार्गानुसरणं कुर्वाणाः, चतुष्पथे स्वीये रक्तदीपविशिष्टे चतुश्चक्रिकायाने स्थिताः भवन्तु ।

आत्मनः प्रश्नं ''किं मह्यमेतत् शोभते?'' चिन्तयन्तु रात्रौ स्वचतुश्चक्रिकायानं स्वीकृत्य भवन्तः चतुष्पथे गच्छन्ति, नियन्त्रकयन्त्रस्य पालनं कुर्वन्तः सन्ति।तदैव मनसि प्रश्नः उदेति कोऽपि रक्षकः नास्ति चतुष्पथे गमननियन्त्रकस्य पालनं न करोमि चेत् का हानिः? तदानीमेव अन्तः करणात् शब्दः प्रस्फुरति ''किं मह्यमेतत् शोभते?'' वयं अरविन्दमहाभागेन सह कुत्रचित् गच्छन्तः आस्म । अरविन्दमहाभागानां माताऽपि सहैवासीत्, रक्तवर्णियं चतुष्पथगमननियंत्रकं दृष्ट्वा मुखात् प्रश्नः निर्गतः ''कोऽपि रक्षकः नास्ति गच्छामि वा?''



वक्रीकृता यस्याः सम्बन्धः नास्माकं भूम्या सह वर्तते न च आत्मना सह इति ।वयं तस्याः शिक्षापद्धतेः बन्धने बद्धाः, तथा सा शिक्षापद्धतिः अस्माकं विचारसामर्थ्ये क्षीणतां प्रापितवती। बुद्धेः तैक्ष्ण्यनाशेन सहास्माकं ज्ञानपरम्परायाः आधारस्यापि विच्छेदः सञ्जातः । अस्मिन्नेव काले अस्माभिः तादृशाः वंशजाः पालिताः येषां स्वदेशस्य परम्परायां स्वदेशस्यास्मितायाञ्च गौरवं नासीत्, अविश्वास एव आसीत् ।एतदेव कारणं येन वयं राजनैतिकरूपेण तेषां शासनात् मुक्ताः किन्तु मानसिकरूपेण तेषां सेवकात्मना एव स्थिताः स्मः ।

अद्यतनकाले अस्माकं बुद्धिः तथा संकीर्णा अस्ति यस्याः शोधनिष्ठव्यापकतावलोकनसामर्थ्यमेव नष्टमस्ति । अद्यतनीयव्यवस्थायां श्रेष्ठानां भारतीयमानवसंसाधनानां बौद्धिकसम्पत्तेश्च उपयोगः न ज्ञानक्षेत्रे अपि तु उद्योगक्षेत्रे एव जायमानः अस्ति ।उद्योगोऽपि तादृशः यः भारतस्य कृते अल्पलाभं विदेशस्य कृते च अधिकं लाभं दद्यात् ।तादृशी शिक्षाव्यवस्था अस्माभिः समादृताऽस्ति यस्यां विद्यार्थिनः विचारकाः न अपि तु बद्धकर्मकरात्मना भवितुं नियन्त्रिताः सन्ति । अद्यतनकाले अस्माकं देशस्य युवानः अधिकाधिकं धनमर्जयितुम् अग्रे सरन्तः दृश्यन्ते ।समाजहितं, राष्ट्रहितं, राज्यहितम् इत्यादिविषयः तेषां प्राथमिकचिन्तनतः बहिर्भूतः जायमानः अस्ति ।यैः वैश्वीकरणकारणादिदं जायमानमस्तीति भाष्यते तद् वस्तुतः मिथ्याचिन्तनम् ।वैश्वीकरणविषये भारतस्यापेक्षया को वा अन्यः ज्ञातुं प्रभवति? यः देशः प्राचीनकाले विश्वस्य आयव्ययव्यवस्थायाः केन्द्रस्थानात्मना आकर्षणकेन्द्रमासीत् ।

वस्तुतः अस्माभिः अस्मत् समाजे शोधदृष्टेः विकासः कर्तव्यः। अस्माभिः ज्ञानाधारिता समाजव्यवस्था निर्मातव्या आसीत् । बुद्धेः सामर्थ्यस्य श्रेष्ठत्वमस्माभिः स्थापनीयमासीत् ।अद्य वयं एतदकरणस्य फलमनुभवन्तः स्मः ।अस्माकं श्रेष्ठतमाः युवकाः ज्ञानविषये न आकृष्टाः सन्ति ।तेषां शोधानुकूला दृष्टिः नाऽस्ति ।यदि तत्र अपवादः स्यात् तर्हि सः अस्मद्देशे तच्छोधप्रवृत्त्यनुकूलं वातावरणं न लभते ।न चास्माभिः तदर्थं तादृगवकाशकल्पनमपि कर्तुं शक्यम् अस्ति।

''पुनरूत्थानामानुसन्धानम्'' (रिसर्च फॉर रिसर्जन्स) इति अस्याः एव समस्यायाः भारतदेशं मोचयितुं कृतः प्रयत्नः ।परिकल्पनेयं देशस्य वैज्ञानिकसङ्घात् विचारमन्थनादिना प्रतिफलिता । निश्चितरूपेण परिकल्पनेयं सकारात्मकान् परिणामान् दर्शयिष्यति ।

अथाप्यस्य महत्त्वपूर्णराष्ट्रकार्यस्य साधनाय निष्ठावन्तः शोधकर्तारः कार्यकर्तारश्च आवश्यकाः सन्ति। ते एव वस्तुतः कार्यस्यास्याधारभूमिं निर्मास्यन्ति ।तदग्रे नयनमपि ते एव करिष्यन्ति । संघस्य सामर्थ्येन वयं संघनिष्ठान् समर्थान् शोधकार्यदक्षान् कार्यकतृन् मान निर्मास्याम इति । कार्यकतृमानसे शोधविषयकदृष्टेः विकासः आवश्यकः वयं तत् साधयामः । वयं तेषां नैतिकमूल्यानां विकासं कारयिष्यामः ।भारते शोधानुसंधानस्य श्रेष्ठवातावरणं निर्मातुमपि तान् बोधयामः।

एतद् दृष्ट्या श्री मुकुल कानिटकरमहोदयानां व्याख्यानमिदं महत्त्वं भजते । एतद्द्वारा तैः **''शोधकर्ता कार्यकर्ता''** इत्याख्यपुरुषस्य मनोनिर्माणानुकूलं वर्त्म विलेखितमस्ति । अस्माकं परम्परा अस्माकं



कर्तव्यबोधस्य पालनाय (मनसि) जागरा अपेक्षिता ।अत एव शङ्करः जागरितः । यदा पुरुषः अन्तः सत्त्वेन जागर्ति तदा स तूर्ष्णीं स्थातुं न प्रभवति। स निद्रातुं न प्रभवति । पश्चात् स कार्यमेव कुर्वन् भवति ।परप्रदर्शनबुद्धया कार्यं न करोति ।कोऽपि अन्यः पश्यति, कोऽपि पृच्छति इत्यतः न तथा कार्यं करोति ।कस्मैचित् वृत्तं देयमस्ति कस्यापि पुरतः वक्तव्यमस्ति इति हेतोः न ।वृत्तपत्रे छायाचित्रमागमिष्यति इत्यतः कार्यं न करोति ।स ममेदं कर्तव्यम् अस्ति, अतः मया कर्तव्यम् इति एव करोति। कर्तव्यबोधोत्तरं जीवनं सानन्दं भविष्यति । बहु आनन्दितः भविष्यति मनुष्यः ।तस्य जीवने समस्याः न भविष्यन्ति ।समस्यासु सः ग्रहीता न भविष्यति। तन्मनसि ''एतत् करोमि न वा'' इति विचारः भविष्यति ।''एतत् कर्तव्यम् आहोस्विन्न'' इति विचारोऽस्मिन् स्पृशति । यस्मात् कर्तव्याकर्तव्यविवेकः तस्य जातः । यत् कर्तव्यं तत् करणीयम् अन्यस्य स्पर्शोऽपि न कार्यः । तत् न द्रष्टव्यमपि। सर्वं चिन्तामुक्तः (tension free) भविष्यति ।यद्दिने कर्तव्यबोधः भविष्यति तद्दिनात् रक्तवहनवेगः न भविष्यति । मधुमेहः इत्यस्य तु कथा एव नाऽस्ति। सुदूरपर्यन्तं तस्य विचारोऽपि न भविष्यति।

जीवनमानन्दितं भविष्यति यस्मात् स कर्तव्यबोधं ज्ञास्यति । कदा ? यदा वयं स्वपक्षतः शतप्रतिशतं साकांक्षाभावं स्थापयिष्यामः। अद्यतनदिवसेषु वयमन्येभ्यः शत—प्रतिशतं समीहामहे स्वं च न गणयामः एतत् कर्तव्यबोधाऽभावादेव भवति ।कर्तव्यबोधः जीवनं परिवर्तयिष्यति। अतः अहं विद्यापीठशिक्षणमञ्चस्य वाटमोडे[33] महोदयेभ्यः अभिनन्दनानि वितनोमि ।यतो हि तैः एव जनैः (भवद्भिः एव जनैः) ''कर्तव्यबोधपक्षस्य'' आयोजनं कृतमस्ति । शिक्षकेषु अध्यापकेषु च एतत्

इति । अस्माभिः यत् दायित्वं प्राप्तमस्ति तत् ज्ञातव्यं तत् पूर्णरूपेण करणीयम् इति । स्वत्रिज्यायां लब्धं तृणं न परित्यक्तव्यम् । अयं भगवद्गीतायाः प्रसिद्धश्लोकस्य अर्थः, ''सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।''(भ.गी. 18.66)

यदाहं बालः आसम् । चिन्तयामि स्म भगवान् कृष्णः कथमभिमानी अस्तीति । पूर्णायां भगवत्गीतायामहङ्कारं त्यज इति वदन् ''सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज'' इति आह ।

परं यदा भगवद्गीतां ज्ञातवान् तदा अर्थः मम बुद्धौ प्रविष्टः ।

सर्वधर्मान् त्यज्य इति नोक्तं परित्यज्य इति उक्तम् । परित्यागः कदा भवति? कस्यापि धर्मस्य इत्युक्ते कर्तव्यस्य त्यागः तदैव भवति यदा तत् कर्तव्यं समाप्यते । सोपानानि किमर्थं सन्ति? ऊर्ध्वगृहारोहणार्थम् । प्रथमसोपानतः अन्तिमसोपानपर्यन्तं गमनम्। यावत्पर्यन्तं सोपानं न त्यज्यते तावत्पर्यन्तम् ऊर्ध्वगृहं न प्राप्यते । पुत्र्याः विवाहः जातः चेत् कर्तव्यं सम्पन्नम्। कर्तव्यस्य परिसमाप्तिः एव परित्यागः। मध्ये एव कर्तव्यं न त्याज्यम् । ''सर्वधर्मान् परित्यज्य'' इत्यस्यार्थः ''सर्वधर्मान् यथावत् पालयित्वा मम शरणमागच्छ इति।'' ईश्वरस्य शरणतां प्राप्नुवन्तु कर्तव्यपालनमकृत्वा पलायनं करिष्यन्ति चेत् ईश्वरोऽपि न लभ्यते ।

''माया मिली न राम'', ''माया प्राप्ता न ईश्वरः'' इति स्थितिः भविष्यति । सर्वतः स्वकर्तव्यस्य पालनं कर्तव्यम् । शतप्रतिशतमेव भवतु न तु नवनवतिः। अतः शतप्रतिशतं कर्तव्यपालनस्य बोधः योग्यमार्गे स्थापयिष्यति । एतत् परोपदेशेन कस्यचिदन्यस्य कथनेन न भविष्यति।



श्रेष्ठतमः पन्थाः। मुकुलमहोदयैः तत् स्मारितं तथा बोधितं ज्ञानं नोपाधिपरिसीमितम् इति । ज्ञानस्रोतांसि अकल्पितस्थानेभ्योऽपि उपलभ्यन्ते । अस्मत्परम्परायां सर्वे गुरुतुल्याः । यत्र मनुष्याः तत्समानतां प्राप्नुवन्त्येव तेन सह प्रकृतिः, वृक्षाः, पर्वताः, नद्यः, सर्वस्मादपि वयं किञ्चित् शिक्षणं प्राप्नुमः एव, यदस्माभिः शिक्षासंस्थातः न प्राप्तुं शक्यते। अस्मत् परम्पराणां वैज्ञानिकदृष्टिः अपि एतादृशस्य विचारस्य एव फलम्। इदमेव भारतभूमेः वैलक्षण्यम् ।

अस्माकं समेषां कार्यकर्तृणां कृते मुकुलानाम् इदं व्याख्यानं महत्त्वपूर्णं तथा दिग्दर्शनपरकं वर्तते । वयं एतत् पठेम, एतन्मर्मावगच्छेम तथा व्यवहारे एतदानयने प्रयतेमहि । वयं स्वीयां कर्मप्रवृत्तिं जागरयेम। तथा स्वकार्ययोजनां निर्माय स्वकार्यप्रारम्भमपि कुर्याम । भारतं समग्रस्य विश्वस्य गुरूस्थानतां पुनः आवहेत्, सम्मानितं भवेत्, कीर्तिमत् भवेत् । एतदेवास्मल्लक्ष्यं भवेत् ।

**डॉ. जोशी सच्चिदानन्दः**
अध्यक्षः
भारतीयशिक्षणमण्डलम्

# शोधकर्ता कार्यकर्ता

**(षोडशोत्तरद्विसहस्रतमखिस्ताब्दस्य (2016) सितम्बर मासस्य (11) एकादशद्वादशदिनाङ्कयोः नागपुरनगरस्य वनामती सभागृहे अखिलभारतस्तरीयः अनुसन्धानप्रकोष्ठस्य अभ्यासवर्गः तथैव अनुसन्धानकार्यशाला (Research Workshop 2016 (RW 2016)इत्यस्य आयोजनं कृतमासीत्। तस्मिन् गुवाहाटी, मुम्बई, रूडकी तथा कानपूर इत्येतेभ्यः आयआयटीतः दशजनाः षट् कुलपतयश्च उपस्थिताः आसन्। सम्पूर्णादपि देशदिग्भागात् सप्तत्रिंशदुत्तरैकशतसंख्याकाः (137) प्रतिभागिनः सम्मिलिताः आसन् । दिनद्वयं कार्यशाला अभ्यासवर्गश्च आसीत् । यस्य समापनकार्यक्रमे व्याख्यानम् इदमाहुतिसत्रनाम्ना प्रदत्तम् । एतद्व्याख्यानाधारेणैव पुस्तिकेयं विद्वत्पाठकसमुदायसमक्षमस्ति – संपादकः)**

**''तत् कर्म यन्न बंधाय, सा विद्या या विमुक्तये ।**
**आयासाय परं कर्म, विद्यान्या शिल्पनैपुणम्।**

(विष्णुपुराणम् श्लो. 9.76)

कार्यसंसिद्धिः संकल्पद्वारा भवति । अग्रिमकालस्य कृते यत्किञ्चित् सम्यक्सङ्कल्पग्रहणमेव कार्यं साधयति। युवानः प्रश्नं कुर्वन्ति–केवला चर्चा भविष्यति आहोस्वित् अग्रेऽपि किमपि करिष्यामः। बह्वीषु सभासु वयं विचारमन्थनं कुर्मः ।आवर्षं सभाः भवन्त्येव ।सर्वत्र



मा गच्छन्तु।'' स्वस्थाने कार्यस्य आन्तं निर्वहणं महत्त्वपूर्णं वर्तते ।एतत् विषयिणी चर्चा जायमाना आसीत्। एतत् रहस्यार्थनिर्गलनावसरे कार्यकर्तृणां स्वाध्यायः प्रचलदासीत् ।एकेन नवमकक्षायाम् उत्तीर्णेन कार्यकर्त्रा सम्यक् अर्थविवरणं कृतमस्य विषयस्य इति स्मरामि ।

तेनोक्तम्, ''अस्यार्थः –यस्य कृते यत् कार्यं प्रदत्तमस्ति स तत् कुर्यात् इति।''

अग्रिमः विषयः अत्यन्तं महत्त्वपूर्णः आसीत् । ''अन्यः स्वकर्तव्यदक्षः नास्ति चेदपि मया मम कार्यं न त्यक्तव्यम् ।

सः नवमकक्षायाम् अधीयानः लघुबालकः इत्थं कथयति ।ततः सः मदर्थं कृष्णः सञ्जातः सः मां भगवद्गीतायाः सन्देशंश्रावितवान् ।

तेनोक्तम् – ''सः स्वकार्ये दोषं करोति चेत् करोतु नाम ।तस्य कार्यं भवन्तः गत्वा सम्यक् करिष्यन्ति चेत् भवन्तः स्वकार्ये दोषं करिष्यन्ति ।

अतः कर्तव्यबोधः यत्र मुक्तिं ददाति तत्र मर्यादामपि जनयति। कर्तव्यबोधस्य मर्यादा महत्त्वपूर्णा पालनीया च सा । लक्ष्मणरेखा बहु प्रसिद्धा वर्तते किन्तु रेखायाः निर्माता एव यदा रेखातः दूरं गतः, तदा सीतायाः अपहरणं जातम् ।यदा यदा लक्ष्मणः स्थानं त्यक्षति तदा तदा सीतायाः अपहरणं भविष्यति। मारीचः तु मायावी, विविधप्रकारकान् शब्दान् करिष्यति एव । किन्तु वयं कियत् कालपर्यन्तं रक्षिष्यामः इत्ययमेव विषयः ।संघटनस्य राष्ट्रस्य च सफलतायाः नैभर्यमावहति । अतः कर्तव्यबोध इति महत्त्वपूर्णः जीवनस्य दिशादर्शकः शब्दः ।संघटने अयमत्यन्तं सरलः । सङ्घे कर्तव्यबोधस्यार्थः स्वकार्यं सम्यक् कार्यम्

वर्ल्ड रेकॉर्ड सिद्धता प्रचलन्ती आसीत् प्रशिक्षणं चलद् आसीत् ।2004 वत्सरे 170 विद्यालयेषु प्रशिक्षणमभवत् तस्मिन् 16049 विद्यार्थिभिः समसमये सूर्यनमस्काराः कृताः ।अग्रिमवर्षे 350 विद्यालयेषु अभवत् । तस्मिन् 29973 छात्राः समसमये सूर्यनमस्कारं चक्रुः ।भव्यता तु संख्यया भविष्यति ।

''किन्तु दिव्यता कथमागमिष्यति?'' इति प्रश्नः तैः पृष्टः ते केन्द्रस्य वरिष्ठाः अधिकारिणः आसन्। कार्यकर्तारः स्व स्वबुद्ध्या समाधानानि प्रयच्छन्तः आसन् ।तैः सर्वाणि समाधानानि श्रुत्वा उक्तम्, ''दिव्यता तु तदा भविष्यति यदा कार्यक्रमः (perfection) पूर्णतायुक्तः, सर्वोत्कृष्टतापूर्णः भविष्यति ।प्रत्येकं कार्यं सुव्यवस्थितं भविष्यति । इतस्ततः पलायनं कर्तव्यं न स्यात् ।अन्तिमक्षणे मध्ये धावनं न भवेत् । तदा कार्यक्रमे भव्यत्वं दिव्यत्वञ्च उभयं स्थास्यति ।

अस्माभिः तदा पृष्टम्, ''तर्हि, एतस्य कृते कः विषयः विशेषतामावहति।?''

तदा तैः उक्तम् – ''महत्त्वपूर्णतां विषयोऽयमावहति स्वप्रदत्तकार्ये कुशलतासाधनम् ।''

तैः बाजीप्रभू देशपांडे[32] महोदयस्य कथा श्राविता । पावनखिंडस्थान् बाजीप्रभून् वयं जानीमः। महाराष्ट्रे सा वार्ता वक्तव्या इति नाऽस्ति ।तदा वयं सर्वे ग्वालियर मध्ये आस्म इत्यतः पूर्णा कथा श्राविता। बाजीप्रभू देशपांडे ''तोप'' इति युद्धयन्त्रस्य निनादं यावत् न श्रुतवान् तावत् स्वक्षेत्रे युद्धस्य पराकाष्ठा कृतवान् ।तत्समये तेभ्यः अन्यत् स्थानं नोक्तमासीत् यत् तत्र अव्यवस्था (गडबड) भविष्यति तत्र



वयं भागं गृह्णीमः । क्वचिदिच्छया, कदाचित्प्रेरणया, कदाचित्प्रमाणपत्रस्य कृते, कदाचित् विषयरुचिकारणेन। एतादृशं सभायाः आयोजनानि भवन्त्येव किन्तु तत्पश्चात् किम् ? वस्तुतः एतद् आयोजनं स्वस्मिन् अनुवर्तनमेव वर्तते ।वयमेतत् कथयन्तः भवामः It is not an event but a movement.नैतत् किञ्चिदायोजनम्, वयमेतत् वैचारिकाभियानत्वेन चालयितुमिच्छामः इति ।

एतद्विचारं पुरस्कृत्य आन्तरराष्ट्रीया संगोष्ठी सञ्जाता ।एषा आन्तरराष्ट्रीया संगोष्ठी बृहती दिव्या च सञ्जाता ।बृहत् तथा दिव्यम् आयोजनमासीत् ।किन्त्वेतत् न केवलमायोजनम् आसीत् अपि तु क्रियाबीजनिक्षेपसाधनमेव ।अत एव तत्समापनं कार्ययोजनारम्भः (Framework for Action) इत्यनेनाऽभूत्। पञ्चपञ्चाशत् कुलपतिभिः मिलित्वा वयमग्रे किं करिष्याम इति निर्णयः कृतः तद्विषये कार्यञ्चारब्धम्। सर्वकारेण किं कार्यम् इति न अपि तु कार्ययोजनारम्भः (framework action) ''वयं किं करिष्यामः'' इति एवास्य आयोजनस्य भाषा आसीत्।

कतिपयानां विश्वविद्यालयानां Ph.D. उपाधेः मार्गदर्शिकायामेव इमे विषयाः उपनिबद्धाः सन्ति । यथा शोधप्रबन्धे भारतीयज्ञानपरम्परामधिकृत्य एकः अध्यायः भवेत् इति । साहित्यातलोकनेन (Review of Literature) सह एत् लेखनीयम् इति भावः कतिपयेषु च विद्यालयेषु शोधप्रबन्धस्य सारसंक्षेपप्रस्तुतिसमये एव तच्छोधकार्यस्य उपयोगिता (Social relevance) कथनमपि कार्यमिति आवश्यकत्वेन निर्दिष्टम् ।षट्विश्वविद्यालयैः विषयोऽयं मार्गदर्शिकायां संयोजितः ।फेब्रुवरी मासादद्यावधि षण्मासा अपि न संजाता अथापि

कार्ययोजनारम्भः (Framework for Action) इति विषये कृतस्य विचारस्य क्रियान्वयनं प्रारब्धम् अस्तीति दृश्यते ।

संघसमुदायाद्यर्थे (सामुदायिकी) सभा इत्यस्मिन्नर्थे कार्यशाला (Workshop) इत्यादि शब्दानां प्रयोगः न भवति, समुदायान्तर्गतः अनुसन्धानप्रकोष्ठस्य अभ्यासवर्गः इति कथ्यते । समुदाये प्रथमत एव आगताः अभ्यासवर्गमिम्अनुसन्धान कार्यशाला (रिसर्च वर्कशॉप) 2016 (RW-2016) इत्याकारेण पश्यन्तः सन्ति।

एतत् वर्कशॉप, अभ्यासवर्गः इत्यनयोः सम्मिलितं रूपम् । ये अत्र शोधकतृरूपेण प्रविष्टाः ते कार्यकर्त्रात्मना बहिर्गमिष्यन्ति । ये केवलकार्यकर्त्रात्मना (कार्यकुशलाः सन्तः) प्राप्ताः ते शोधविषयिणीं बुद्धिं प्राप्य गमिष्यन्ति । शोधकर्तारः भविष्यन्ति ।

शोधकर्तुः कार्यकर्तृत्वं, कार्यकर्तुः च शोधकर्तृत्वं सम्पादयितुं क्रियमाणः अयं प्रयत्नः । यस्मात् तयोरैक्ये एव पुनरूत्थानस्य सम्भावना भवेत्। शोधकर्तुः कार्यकर्तृत्वाभावे केवलशोधे कृते कार्यस्य इतिश्रीः स्यात्। मन्येत च सः ''मया शोधः कृतः, प्रापितश्च प्रसिद्धिं देशविदेशेषु'' इति । विदेशे शोधकार्यविषयिणी प्रज्ञा आधुनिकानामधुनाप्यत्यधिका वर्तते। एतद्विषये बाबा रामदेवस्य[1] दृष्टान्तः अनुकरणीय एव ।

तान् कश्चित् अपृच्छत् ''बाबाजी भवन्तः गिनिज वर्ल्ड रेकॉर्ड उल्लंघयितुं किमर्थं न यतन्ते?'' इति।

तदा तैः उक्तम् ''वयं तादृशान् कीर्तिशिखरारूढान् निर्मास्यामः तदा भविष्यत्काले गिनिज जना एव आगत्य पतञ्जलेः रेकॉर्ड उल्लंघयितुं यतिष्यन्ते''इति।



क्षेत्रप्रचारकस्य कृते तु किं कार्यं कर्तव्यं ''नाऽस्ति'' इति ज्ञानमपेक्षितं भविष्यति । ईदृशः कर्तव्यबोधः अपेक्षितः । इदानीं, प्रान्तप्रचारकरूपेण स्थितं जनमिव मया कार्यं न करणीयमस्ति । कस्मिन्नपि कार्ये अवरोधः न कर्तव्योऽस्ति । तदर्थं मया अन्यत् कार्यं कर्तव्यमस्ति । तदा मयाऽध्ययनम् आरब्धम् ।''

तैः स्वानुभवं वैय्यक्तिकरूपेण प्रकाशयद्भिः उक्तम् – ''एतादृशः समयः स्वस्याऽध्ययनाय भवति । तदा अध्ययनं कुर्वन्तु किन्तु स्मरणे स्थापयन्तु यत् – अन्यस्य कृते स्वकर्तव्यपालनाय अवकाशः प्रदातव्यः अस्तीति । संघटनायां संघे वा कर्तव्यबोधस्य अयमप्यंशः अवगन्तव्यः वर्तते । वयं यदि अन्यस्य कार्यं निर्वहामः तर्हि स्थानद्वये अपि व्यस्ताः भवामः। तेन सह महानगरस्य दायित्वं यस्यास्ति तस्यापि कर्तव्ये उत्पातं जनयामः।''

सामुदायिकसूर्यनमस्कारस्य बृहदायोजनं ग्वालियर मध्ये जायमानमासीत् । एतत् गिनिज वर्ल्ड रेकॉर्डमध्ये सम्मिलितमासीत् । मासपर्यन्तं तस्य कार्यक्रमस्य संयोजनादिकमस्माभिः कार्यकर्तृभिः क्रियमाणमासीत् । सर्वेभ्यः कार्यकर्तृभ्यः दायित्वं दीयमानमासीत् । दायित्वस्यापि महती सिद्धता आसीत् । अहं सम्यक् स्मरामि तस्यां सभायामेके वरिष्ठाधिकारिणः आगताः आसन् ।

ते कार्यकर्तृणां निकटे पृष्टवन्तः – कार्यक्रमस्य भव्यं दिव्यञ्च आयोजनं कर्तव्यं चेत् किं कर्तव्यम्। भव्यत्वं तु संख्यावृद्धौ भविष्यति । षोडशसहस्त्रापेक्षयाधिकाः छात्राः एकस्मिन्नेव समये, समसमये सूर्यनमस्कारं करिष्यन्ति चेत् भव्यता तु भविष्यति एव । इदानीं गिनिज

अतः पदन्तु कर्तव्यं वर्धयति, कार्यं वर्धयति । संघटनस्य दायित्वं कर्तव्यस्य बोधः किन्तु तेन सह मर्यादाः अपि दीयन्ते ।

एकवारं परमपूज्यसरसंघचालकैः मोहनवर्यैः सह काचित् वार्ता सञ्जाता । विवेकानन्दकेन्द्रे द्वाविंशतिः वर्षाणि कार्यं कृतम् । तदुत्तरं मम दायित्वपरिवर्तनावसरस्य वार्ता मम। संघप्रचारकक्षेत्रे 2012 तमे वर्षे पदार्पणं कृतं मया। भारतीयशिक्षणमण्डलस्य दायित्वं तु परं लब्धम्। तत्पूर्वतना चर्चा एषा । तादृशचर्चासत्रस्य समये सार्धमासद्वयम् अवकाशः लब्धः । मम दायित्वं निश्चितं नासीत् विवेकानन्दकेन्द्रात् मुक्तः आसम्। संघस्य दायित्वं निश्चितं न आसीत् ।

मया उक्तम् – ''सार्धमासं यावत् किं करिष्यामि ।'' तैः उक्तम् – द्वाविंशतिवर्षाणि मातापित्राभ्यां दूरे स्थितः असि । कतिपयाणि दिनानि मातापित्रादिभिः साकं यापय । शाखां गत्वा स्वीयं कार्यं कुरु।

मया उक्तम् – ''एतावन्ति वर्षाणि जातानि । रिक्तः स्थातुं न जानामि । इदानीं कथं रिक्तः तिष्ठामि।

तैः उक्तम् – ''एतदपि महत् कर्तव्यम्।'' एतत् कथयद्भिः तैः विशेषः उक्तः,

ते स्वानुभवपूर्वकम् आहुः । ''ऐदं प्राथम्येन यदा क्षेत्रप्रचारकस्य दायित्वं प्रदत्तं तदाहं पटना प्रेषितः। तदा मम महती समस्या इयमेव आसीत् – ''समयं कथं यापयामि?'' इति।'' प्रांतप्रचारकरूपेण अहं यदाऽऽसम् तदा कार्यभारः अत्यधिकः भवति स्म । यस्मात्, सर्वतः सक्रियपदम् (active post) प्रांतप्रचारकस्य एव अस्ति । तेन सर्वाणि कार्याणि द्रष्टव्यानि सन्ति । अतः निद्रातुमपि समयः नाऽस्ति।



किमर्थं वयं समस्यां कथयिष्यामः यत् 'Nature' मध्ये प्रकाशनीयं भवति? विदेशे प्रकाशनीयं भवतीत्यादिकम्? यत्र क्वचित् प्रकाशयन्तु । समीचीनाः विषयाः प्रकाशिताः भवेयुः जनमानसं च प्राप्नुवन्तु । कतिपयदिनेभ्यः परं RFRF इत्यस्य प्रकाशनं जर्नल वा यत्किञ्चित् प्रकाशितं भवेत् तदा तस्य सामर्थ्यं तावद् भविष्यति यद् विश्वजनाः तस्मिन् स्वाभिप्रायं प्रकाशयितुं पृष्ठतः धाविष्यन्ति । अयं विचारः भवत्सु विश्वासं निधाय एव अस्माभिः कर्तुं शक्यः अस्ति । एतावान् विश्वासः भवत्सु निश्चयेन वर्तते । समस्यां न निरूपयिष्यामः पराक्रमं करिष्यामः, पराक्रमं कर्तुं समस्यायाः प्रस्तुतिःकरणीया। अत एव शोधकर्ता कार्यकर्ता भवेत् ।

अनेन सह भारतीयशिक्षणमण्डलसंस्थाकार्यकतृभिः केवलमेतत् संघटनस्य कार्यं कृत्वा स्थीयते इति न युक्तम् । ''अहं केवलं जनान् संयोजयिष्यामि । नर्मदास्थरक्तवर्णाङ्कित पाषाणम् इवाहं अमरकण्टकात् भरूचपर्यन्तं गमिष्यामि अथापि मयि न किञ्चित् परिवर्तनं भविष्यति'' इति विचारः अत्र न चलिष्यति । ''माम् अत्र पाठयितुं लेखयितुंवा शोधं कर्तुं न वदन्तु, अहं शोधकर्तॄन् योजयिष्यामि, अहन्तु केवलकार्यकर्ता अस्मि । संघप्रचारकः अस्मि ।'' इति भावान् कार्यकर्ता नाऽत्र उपयोगितामावहिष्यति ।

कार्यकर्तृः शोधकर्तृत्वं भवेत् । शोधकर्ता कार्यकर्ता भवेत् । यद्विना नैतत् साधयिष्यामः तद्दिने पुनरुत्थानं भविष्यति। एतदेव श्रीरामेण कृतम् । इदमेव समग्रं कार्यम् । अत एव भारतीयशिक्षणमण्डलस्य ये कार्यकर्तारः आत्मानं शोधकर्तृत्वेन न गणयन्ति तानहं भूयोभूयः कथयन्नेवागतः अस्मि यत् शिक्षणमण्डलस्य कार्यकर्ता असिचेत्

न्यूनातिन्यूनं प्रत्यहं दशपृष्ठानि पठतु, न्यूनातिन्यूनं प्रत्यहमेकं पृष्ठं लिखतु । प्रकाशनार्थं न अपि तु स्वस्पष्टतायै । **विचारस्य लेखनेन सुस्पष्टतासम्पादनं भविष्यति।**

2008 मध्ये देहल्यां ममकृते विवेकानंद इंटरनेशनल फाऊंडेशन[2] मध्ये सचिवस्य दायित्वं लब्धम्।अजित डोभालमहोदयेन[3] सह वर्षत्रयं देशस्य सुरक्षादिविषयम् अधिकृत्य कार्यं कर्तुमवकाशः लब्धः ।तत्समये अजितमहोदयानां नोएडा स्थिते गृहे प्रथममेलने तैः मां पृष्टम् ''मुकुलमहोदय, भवान् चिन्तयतु यत् समुदायस्य (संघस्य ) दायित्वं भवता न प्राप्तमस्तीति ।We have to build it into a think tank.

तै उक्तं विचारनिपानम् (think tank) इति विषयः भारतीयानां मनसि अधुनापि न प्रविशति ।अमेरिकादिदेशे विचारनिपानम् (think tank) एव सर्वकारं देशं वा चालयति ।

डोभालमहोदयैः उक्तं ''भवता पूर्वं सप्तदश अष्टादश – 17–18 वर्षेषु संघे यद् शिक्षितं तत् सर्वं विस्मरतु, यत्र भवान् उपविष्टः तत्रैव भवता स्वस्य विचारकत्वं प्रबुद्धत्वं च सर्वेषां पुरतः प्रतिष्ठापनीयम् अस्ति। किं तर्हि भवान् आत्मानं परिवर्तयितुं सन्नद्धः अस्ति?''

अत्यन्तं मर्मभेदी, विचारार्थं प्रवर्तयितुं उत्तमः प्रश्नः आसीत् । डोभालवर्यैः प्रथमसभायामेव पृष्टं यत् भवता धौतवस्त्रं मात्रं धरिष्यामि इत्याद्या प्रतिज्ञा तु नाकारि?।

मया पृष्टं – ''किमर्थं, किमभूत् ।?''



एका गौः चिन्तयति ''दूरे गन्तुं न पारयेयम् इति हेतोः बद्धा अस्मि।'' अन्या गौः आलोचयति। ''अस्याः रज्जोः त्रिज्यायां चरितुं शक्नोमि।'' तस्मिन्नेव वृत्तभागे उत्पन्नं समग्रं तृणं सा भक्षयति । स्वकर्तव्यं समग्रं पालयति तृणभक्षणोत्तरं तृणसमाप्तौ गौः उच्चरवेण हम्मा इति करोति ।

रामकृष्णाः वदन्ति, ''वेणुवादनरतः गोपालः कया हम्मा कृतमिति पश्यति ।पश्यति च सः समग्रं तृणं तथा भक्षितमस्ति इति ।तदा रज्जोः लम्बतां विवर्धयति ।इदानीं सा अधिकक्षेत्रे चरितुं प्रभवति ।इदानीं तस्याः कर्तव्यं वर्धितम् ।''

कर्तव्यपालनापेक्षया कर्तव्यमेव अधिकं प्राप्यते । आंग्लभाषायामुच्यते Reward of good work is more work - सम्यक् कार्यं क्रियते चेत् पुरस्काररूपेण इतोऽपि कार्यं लभ्यते । कर्तव्यपालनम् इत्थं प्रकारेण अधिकारं ददाति ।अधिकारः वर्धते । अस्मादृशेषु संघटनेषु कश्चित् पदभारं प्राप्नोति चेत् स वदति? ''न. न. मम कृते मास्तु'' तदा जनाः आश्चर्यं कुर्वन्ति ।अन्यत्र तु पदप्राप्तये स्पर्धा भवति अत्र पदोन्नत्यर्थं ''न'' इति उच्यते ।

केनचित् मन्निकटे पृष्टं, ''भवतां संघटने पदस्वीकारे पलायनं कुतः?''

मया उक्तम्, – अत्र पदेन सह पदत्वं च युज्यते।यावत् बृहत् पदं तावत् बृहत् पदत्वम्।

''पदाई इति अर्थे पदत्वंशब्दः संस्कृते प्रयुक्तः विद्वांसः विचारयन्तु।''

वस्तुतः मनुष्यः स्वतन्त्रः अस्ति वा? तर्हि ते कर्तव्यपालनाय इदमुदाहरन्ति।

रामकृष्णपरमहंसाः वदन्ति– ''गोपालः गां तृणं भक्षयितुं वनं नयति । सर्वाः गाः अपि तेन द्रष्टव्याः सन्ति, वेणुनादोऽपि कर्तव्यः अस्ति। वेणुवादनाय समयः अपेक्षते इत्यतः सः बृहदाकारयारज्ज्वा सर्वासां गवां बन्धनं करोति। तत् रज्ज्वा च पुनः वृक्षे बध्नाति । इतः परं गौः न कूपं गमिष्यति यतः सा बद्धा अस्ति। अस्माकं निखिल दामले महानगरसचिवाः वर्तन्ते, अस्माकं भारतीयशिक्षणमंडलस्य रज्जुः महानगरपर्यन्तं वर्तते । मारोती पवारस्य[29] विदर्भपर्यन्तमस्ति । अरविंदमहोदयानां समग्रभारते। तर्हि रज्जोः दीर्घता भिन्ना भिन्ना वर्तत।

रामकृष्णपरमहंसाः वदन्ति – ''भवतां दायित्वेन, परिवारस्य दायित्वेन, समाजस्य दायित्वेन गोपालः समेषां बन्धनं कृतवानस्ति । दायित्वरूपा एव रज्जुरियम् । तथा रज्ज्वा भवन्तः बद्धाः।

तदा गौः एतद्विचिन्त्य रोदिति यत् – ''पश्यन्तु चतसृष्वपि दिक्षु कथं हरिद्वर्णात्मकं क्षेत्रं प्रविस्तीर्णमस्ति । गोपालः मां रज्ज्वा बद्धवान्। केवलमहम् एतत् रज्ज्वन्तरं यावत् गन्तुं प्रभवामि । एतन्मे बन्धनम् ।'' तद् बन्धनमिति मत्त्वा सा उपविशति । न खादति तृणम् । यस्मात् दूरे विद्यमानं तृणं तस्याः प्रियं भवति ।

द्वितीया गौः आलोचयति, ''न कापि क्षतिः । दूरे अपि समीचीनं तृणं स्यादेव, किन्तु एतया रज्ज्वा यद् बन्धनं कृतं, तत् परिधौ यावत् वर्तते, तद् वृत्तपरिधौ तृणभक्षणाय मुक्ताहमस्मि ।



तैः उक्तम् – ''अत्र विवेकानन्द इंटरनेशनल फाऊंडेशन कृते कार्यं कुर्वन् वेशान्तरमपि धारणीयं भविष्यति, यतो हि केचित् ''एम्बसीज्'' सन्ति यत्र गत्वा अस्माभिः कार्यं कर्तव्यं भविष्यति'' ।

मया उक्तम् – ''देशस्य कृते यत्किञ्चित् कर्तुं कोऽपि निर्बन्धः न भविष्यति ।''

मया वेषः न धृतः इति अन्यः विषयः किन्तु मदर्थं वेषः निर्मितः आसीत् ।

यदा सपकाल[4] महोदयाः ''टाय कोट'' इत्यादि धृत्वा आगताः तदा अरविंद[5] महोदयं मां च धौतवस्त्रे दृष्ट्वा चकिताः। तै पृष्टम् – ''कोऽपि वस्त्रविशेषः निर्धारितः अस्ति वा? मयापि धौतवस्त्रं धारणीयं भविष्यति वा यदि विज्ञातमभविष्यत् धौतवस्त्रे आगन्तव्यम् इति तदा अहमपि धौतवस्त्रेणैव आगमिष्यम्'' ।

**''आत्मनः परिवर्तने तत्परता नास्ति चेत् देशस्य कृते कार्यं करोमीति दम्भः न कार्यः।''** एतत् वक्तुमिदमुदाहरणं प्रस्तौमि। मम बहुप्रदीर्घा श्मश्रुः आसीत् यदाहं राजस्थाने कार्यं कुर्वन्नासम् । राजस्थानीयाः श्मश्रुवेशेणैव अधुनापि मां स्मरन्ति। ''दाढीवाले बाबा'' इति कथयन्ति स्म । अस्मिन् देशे चाणक्यस्य स्थानं विभूषयतः डाभोलमहोदयस्य नाम मया उक्तम् । द्वितीयचाणक्यस्य नाम यः । वस्तुतः पृष्ठतः स्थितः सन्नेव कार्यं करोति, यश्च विवेकानन्दकेन्द्रेण सह संयुक्तः महान् विचारकः मान्यः गुरुमूर्ति[6] महोदयः । एतस्यापि सन्निधिः मया प्राप्तः।

ते मामपृच्छन् ''श्मश्रुं कर्तयिष्यसि किम्?'' ममापि तावत्पर्यन्तं श्मश्रुविषयकाभिमानः वर्धितः आसीत् । दशवारं श्मश्रूपरि हस्तं भ्रामयामि स्म । तेषां तत्प्रश्नोत्तरं मम मनसि विचारः आगतः किमर्थं श्मश्रुकर्तनं कर्तव्यम् इति''

तदा अविशेषेण किञ्चित् विवादः कृतः ''गुरूजीमहोदयानामपि श्मश्रुः आसीदेव ।''

तदा तैरेकं वाक्यमुक्तं यद्वाक्यं माम् विचारविषये अप्रेरयत् इति मन्ये ।

गुरूमूर्तिभिः उक्तं –"It's a funny thing" ते आङ्ग्लभाषायामेव वदन्ति स्म ।

''अत्यन्तं विनोदविषयोऽयं देशस्य कृते स्वगलं कर्तयितुमपि उद्युक्तः श्मश्रुकर्तनं नेच्छति ।'' देशस्य कृते आत्मबलिदानस्य भाषां करोति भवान्, प्राणान् दातुं प्रभवति, श्मश्रुकर्तनं न करिष्यति कीदृशीयं निष्ठा ।?''

**आत्मपरिवर्तनं विना साधनारम्भः न भवति ।**

"You cannot change without being the change."

आत्मपरिवर्तनं करणीयं भविष्यति ।एतत् कर्तुं यावता सन्नद्धाः न भविष्यन्ति तावत्पर्यन्तं कार्यं न भविष्यति अतः एव शोधकर्ता कार्यकर्ता भवेत् । कार्यकर्ता शोधकर्ता च ।



संघटनस्येदमनुपमं शास्त्रं डॉ. हेडगेवार[27] महोदयेन ग्रथितम् तत्कारणात् राष्ट्रीयस्वयंसेवकसंघटनेन अत्यद्भुतं संघटनं निर्मितम् । तत् संघटनशास्त्रं विजानन्तः कर्तव्यबोधस्य अर्थं पश्यामः''मम यद् दायित्वं तस्य बोधः'' । दायित्वबोधः एव कर्तव्यबोधः । यद्दिने दायित्वं प्रबुद्धं भविष्यति तद्दिने एव भगवद्गीता स्वस्य आचरणे अवतरिष्यति । अन्यत् किमपि कर्तव्यं नास्ति । गीतायाः पठनं कर्तव्यं न भविष्यति । किञ्चित् साधनमपि न अनुष्ठेयं भविष्यति । भवन्तः भवतः कृते यत् शोभनं तत् दायित्ववहनानुकूलं वर्तनं कुर्वन्तु । एतावत् एव कथनम् । ''यद् भवतां दायित्वं वर्तते, तत्कर्म परिपालयन्तु । इदमेव भवतां कर्तव्यम् । कर्तव्यं भवतां मर्यादायाः निर्धारणं करोति । ''अधिकाराणां मर्यादा'' इति विषयमधिकृत्य चर्चिल शब्दप्रयोगम् अकार्षीत् । चर्चिल वदति भवतां दण्डभ्रामणे अधिकारः अस्ति । व्यक्तिस्वातन्त्र्यविषयिणीं चर्चां कुर्वन् चर्चिल ब्रूते –You are free to move your stick ''जनतानाम् अस्ति । यः कोऽपि यत्र कुत्रापि स्वदण्डं भ्रामयितुं शक्नोति । भवन्तः भवतां दण्डं भ्रामयितुं स्वतन्त्राः । ततः अग्रिमक्षणे एव स वदति, ''किन्तु भवतां स्वातन्त्र्यं तत्रैव समाप्तं भवति, यत्र मम नासाग्रमारभ्यते ।'' "Your liberty your freedom ends where my nose begins", भवन्तः दण्डं भ्रामयितुं शक्नुवन्ति किन्तु मम नासां छेत्तुं न प्रभवन्ति । यत्र मम नासा प्रारभ्यते तत्र भवतां दण्डभ्रामणस्वातन्त्र्यमपि समाप्तम् । कर्तव्यं मर्यादां ददाति ।

रामकृष्णपरमहंसस्वामिनः एतत् सुन्दरकथामुखेन वदन्ति रामकृष्णपरमहंसाः अन्यैः षोडशशिष्यैः विवेकानन्दैश्च सह भाषणं कुर्वन्तः वदन्ति, अद्यतनकाले व्यक्तिस्वातन्त्र्यविषये बहुधा वार्ता भवति, किन्तु

त्वं क्लीबतां न प्राप्नुहि, नपुंसकतां त्यज, पौरुषेयं कार्यं कुरु। स्वपौरुषं विजानीहि ।

पुनः सः शब्दः आगतः येन भगवद्गीतायाः मर्म उक्तम् ।भगवता श्रीकृष्णेण उच्यते – ''नैतत्त्वय्युपपद्यते'' – इयं न तव उपपत्तिः । नैतत् तव कर्तव्यम् । त्वं यत्र असि तत एव तव उपपत्तिः निश्चिता अस्ति। ''उपपत्तिः इत्यस्य अत्र अर्थः यत्र भवान् उपविष्टः अस्ति तत् स्थानम् । 'उप' इत्यस्य अर्थः भवति आसनं, तस्मादुपविश इति । 'उपनिषद्' इत्यस्याप्यर्थः गुरोः समीपे उपवेशनम् इति । उपपत्तेरर्थः कस्मिन् स्थाने उपवेष्टुं भवतः योग्यता इति । अतः अस्माकं कर्तव्यम्, अस्माकम् उपपत्तिः योग्यता एव निश्चिनोति ।

अस्माकं कर्तव्यं, वयं के स्मः इति विषये नैर्भयं न भजते । अस्मदधिकारः अस्मद्योग्यतामाश्रित्य भवति। अस्माकं कर्तव्यं नास्मद् योग्यतामधिकृत्य तिष्ठति अपि तु उपपत्तिमधिकृत्य तिष्ठतीति । यतो हि कर्तव्यस्य स्वभावोऽयं परनिमित्तत्वम् इति । कर्तव्यं सर्वदा परनिमित्तं भवति नात्मनिमित्तम् । कर्तव्यम् इति एका भूमिका या सर्वैः सह मिलित्वा पालनीया । सर्वेषां कर्तव्यं मिलित्वा सम्बन्धः भवति । तेन सह समाजः। अतः कर्तव्यं न केवलमुक्तिकारणम् अपि तु मर्यादाजनकम् अपि । तां मर्यादामतिक्रम्य न गन्तुं प्रभवामः। भवतामुपपत्तिः भवतां मर्यादा । मर्यादायां व्यवहारः कार्यः इति अपि कर्तव्यम् । तां मर्यादां नातिक्रान्तुं शक्नुमः अतः महत्त्वपूर्णं यत् स्वकर्तव्यबोधः । एतदर्थं समुदायस्य शास्त्रं महत्त्वपूर्णं वर्तते। संघटनं बहु सरलम्। यदि तत्समये समुदायशास्त्रमभविष्यत् तर्हि गीतादि कथनम् कर्तव्यं नापतिष्यत् ।



यदा वयमात्मनि अवलोक्य पृच्छामः कस्य किं वा आवश्यकमस्तीति तदा समाधानमवश्यं लभ्येत। वयं "need based, need based" इति विषये वदामः । युगस्य का आवश्यकता? विवेकानंदस्वामिपादैः सितम्बर्मासस्य एकादशे दिनाङ्के शिकागोनगरे युगपरिवर्तनस्य निनादः कृतः आसीत्। 2.30 निमेषात्मके भाषणे 420 शब्दाः सन्ति । केवलं विंशत्युत्तरचतुःशतम् । केवलं भारतं न अपि तु समग्रं विश्वं परिवर्तयितुं क्षमं विषयस्थापनम् आसीत्, एतादृक्दिने कार्यशालायाः अस्याः प्रारम्भः, तत्समये एते एव शब्दाः आगताः । कुठियाला[7] महोदयैः उक्तं यत् दशवर्षेभ्यः पूर्वं संभवम् आसीत् अथावाऽनन्तरं भविष्यतीति न जाने इति।

एकैकस्यापि घटनाक्रमस्य समयः निर्धारितः भवति । एवं भाति यदधुना युगपरिवर्तनस्य समयः आगतः । यदि डोभालानां वचनमुद्धरामि तर्हि तेषाम् एकः अत्यन्तं प्रियशब्दः आसीत् । रणसंग्रामविषये भाषणसमये सर्वदा एव ते कथयन्ति स्म यत् विश्वस्य इतिहासे भूराजनीत्याम (geo politics) वैश्विकान्तरराष्ट्रीयसम्बन्धेषु एकैक– राष्ट्रस्य कृते अवकाशगवाक्षः (window of opportunity) भवत्येव। एकः ''अवकाशगवाक्षः'' ''अवकाशवातायनं'' वा उद्घाटितं भवत्येव । यदि तदुपयोगः क्रियते तर्हि तद्राष्ट्रं महत् स्थानं प्राप्नोति । एतादृशः गवाक्षः द्वितीयमहायुद्धानन्तम् उद्घाटितः भारते तदा नावीन्येन स्वातंत्र्यं प्राप्तम् आसीत्। यदि तत्समये एव समग्रं राष्ट्रमेकस्यां दिशि संकल्पपुरःस्सरम् अगमिष्यत् तर्हि विंडो ऑफ अपोर्चुनिटी इत्यस्य उपयोगः अभविष्यत् । समग्रं जगत् एकामेव सम्भावनां वदति यत् भारते क्षमता (Potential) अस्ति । चत्त्वारिंशत्वर्षेभ्यः इदमेव श्रुत्वा श्रुत्वा कर्णौ बधिरौ जातौ ।

कियत्पर्यन्तं ''Potential, Potential" इत्येव कथनं भविष्यति । सम्भावनां कदा करिष्यामः । When will that potential be actualized? तमेकं 'अवकाशगवाक्षम्' वयं त्यक्तवन्तः तदुपयोगः अमेरिका देशेन कृतः । द्वितीयमहायुद्धोत्तरं भूराजनीतिः (जिओ पॉलिटिक्स) इत्यस्य तन्त्रमेव परिवर्तितम् । अमेरिकाराष्ट्रमात्मनः स्थापनमकरोत् । रशियादेशः तं प्रति आह्वानरूपेण तिष्ठति ।

अशीतिदशके द्वितीयः ''अवकाशगवाक्षः'' उद्घाटितः । भारतस्य पुरस्तादपि उद्घाटितः आसीदिति मन्ये । प्रायः तत्समये सक्षमं नेतृत्वलाभं न प्राप्तवन्तः । समर्थाः नेतारः नासन् । विश्वस्य इतिहासे सप्तति – अशीति 70–80 दशकं महत्त्वं भजते । राजनीति विज्ञानस्य (Political Science) विद्यार्थिभिः अध्ययनं कृतमस्ति । 1971तमे वर्षे भारतस्य स्त्रीप्रधानमन्त्रिणा बांग्लादेशनिर्मितेः महत्कार्यं कृतमासीत् । एतच्च बहु धैयपूर्णम् आसीत् । सः भारतस्य कश्ते विश्वेतिहासे समर्थराष्ट्रात्मना स्थातुमुद्घाटितःअवकाशगवाक्ष एव आसीत् । वयं जातिव्यवस्थायामेव बद्धाः अभूम । 80 दशकं''मण्डलायोगदशकम् ।''[8] इति मन्तुं वयं प्रभवामः । देशस्य समग्रस्यापि सामाजिकस्य स्वास्थ्यस्य विचित्रां दिशं प्रददातुं प्रवृत्तं दशकमिदम् इति मन्तुं शक्नुमः । अवकाशगवाक्षः उद्घाटितः पिहितश्च । पञ्चाशद्वर्षेषु वारत्रयं गवाक्षः उद्घाटितः । अस्मिन् पर्याये उद्घाटितं गवाक्षं यदि नोपयुञ्ज्महे तर्हि प्रकृतिः चतुर्थवारं गवाक्षमिमं उद्घाटयिष्यति न वा?

विश्वेतिहासे मानवतायाः विचित्रं मार्गवक्रत्वमास्थिता वयम् । यदा पर्यावरणविदः Existential Threat इत्यस्य वार्तां कुर्वन्ति तदा वयं कुर्मः । मानवत्वं रक्षितं स्यान्नवा इति विचारयामः । न जानीमः



शय्यासनभोजनेषु क्रियासु अद्यप्रभृति कियन्तमपराधं कृतवान् ! नाहं जाने । त्वं प्रभुः असि, ईश्वरोऽसि, इति मया न ज्ञातमासीत् ।'' इत्थं सम्बुद्धः अर्जुनः कृष्णं प्रति पृच्छन्नस्ति यत् ''किं मम कर्तव्यम्?'' इति ।

भगवद्गीता कर्तव्यबोधस्य आख्यानमेव । अर्जुनः तत्कर्तव्यं न जानाति । सः मायामोहजाले निबद्धः । स पुरस्तात् ''श्यालासम्बन्धिनस्तथा, पितरः पौत्राः''[23] (1.34) स्वपितामहादि सम्बद्धजनान् पश्यन्नस्ति । तान् वीक्ष्य सः विचलितः भूत्वा कथयन्नस्ति इमान् कथमहं हन्मि ? इति । स वदति, ''कौरवाः स्वकर्तव्यं न जानन्ति किन्तु वयं जानीमः ।''

अत एव ''अहो बत महत्पापं कर्तुं व्यवसिता वयम् ।''[24] (भ.गी. 1.48)

इति प्रथमाध्याये स वदति, ''अहं कियत् महत् पापं कर्तुं गच्छन्नस्मि । अहं रणसंग्रामभूमेः पलायनं करिष्यामि इति ।

एतत् श्रुत्वा कृष्णेण किमुक्तम् – कृष्णेन द्वितीये अध्याये प्रथमं वाक्यमुच्चरता इमे एव शब्दाः प्रयुक्ताः ते शब्दाः –

''कुतस्त्वा कश्मलमिदं''25 (भ.गी. 2.2)

एतत् कालुष्यं तव बुद्धौ कुतः आगतम्?

'कुतः' कस्मादागतम् ।

''विषमे समुपस्थितम्'' – अस्यां रणभूवि इत्थं विरुद्धावाक् । ततः अग्रिमवाक्ये कथयति – ''क्लैब्यं मा स्म गमः पार्थ ।''[26] (भ.गी. 2.3)

शङ्करः आत्मानं पृच्छति – ''कस्त्वं कोऽहम् कुत आयातः का मे जननी को मे तातः।'' –किं कर्मकर्तुः तव जन्मग्रहणम्? सः आत्मानं पृच्छति तदा वर्षचतुष्टयात्मकः शङ्करः वस्तुतः परमार्थतः जागर्ति।

यस्य जीवने कर्तव्यबोधः जागरूकः तमेव वयं जानीमः ।अन्यथा तु नाऽस्माकं प्रपितामहादीनामपि नाम स्मर्यते ।पितामहपर्यन्तं तु ज्ञायते ततः प्राचीनानां तु न ज्ञानं भवति ।कदाचित् प्रपितामहस्य ज्ञायते किन्तु पितृपितामहस्य निश्चयेन न विज्ञानं भवति । ते जनाः तु विवेकानन्दस्वामिपादानां, महात्मागांधिवर्याणां च परमेव उत्पन्ना आसन् अथापि तेषां नाम न ज्ञातं भवति । विवेकानन्दानां ज्ञायते किल । राणाप्रतापशिवाजी इत्यनयोः पर्यन्तमस्माभिः वार्ता एव न क्रियते यस्मात्ते षोडशसप्तदशसंख्याविशिष्टाः पूर्वजाः स्युः अतः ज्ञानं तेषां विषये न भवत्येव । येषां रक्तमस्माकं नाडीषु प्रवहति तेषां विषये न भवत्येव । येषां रक्तमस्माकं नाडीषु प्रवहति तेषां नाम न विजानीमः किन्तु शिवाजीमहाराजानां, महाराणाप्रतापानां, सुभाषचन्द्रबोसानां जानीमः । किमर्थ? यस्मात्तैः स्वजीवने स्वकर्तव्यं निरुहितमस्ति । तेषां स्वकर्तव्यबोधः सञ्जातः आसीत् । भगवद्गीतायाः सन्देशः इत एव आरभ्यते । एतत् संवादम् आरभ्य एव गीता प्रारभ्यते । कर्तव्यपथि च्युतमर्जुनं प्रति कृतेन मित्रेण, कृष्णसखाद्वारा प्रदत्तेन कर्तव्यप्रबोधनेन परं प्रारभ्यते इति ।

विश्वरूपदर्शनोत्तरं भयभीतः अर्जुनः हस्तौ संयोज्य नमस्कारं कृत्वा, कृष्णं प्रति ब्रवीति–, ''इदानीं स्वीयं घनमेघश्यामं सुन्दरं रूपं दर्शय, अहमत्यन्तं भीतभीतोऽस्मि त्वमेवं महापुरुषः असीति न विज्ञानमासीत्। अहं तु त्वां ''सखेति माधवेति''[22] (भ.गी.12.41) कथयन् अज्ञानपूर्वकं



''अलगाववादः, आतंकवादः, अत्याचारः, हिंसा इत्यादिकं चरमं सीमानमाश्रित्य वर्तते। सिरिया, लिबिया, पूर्णयुरोपम, काश्मीरतः अफगानिस्तानपर्यन्तं हिन्दुकुशक्षेत्रे यज्जायमानं वर्तते तत् कदा विश्वं व्याप्य हरिष्यतीति?''

केरले अद्य किं जायमानमस्ति? अद्यतनकालीना केरलस्य वास्तविकी स्थितिः मीडियामाध्यमेन अस्माकं पुरतः नागच्छति, मिडिया एतद्विषये न कदाचिदपि मुखमुद्घाटयति ।अथापि केरलस्य स्थितिः गृहकलहापेक्षया न्यूना न वर्तते । कण्णुरसदृशेषु जिलास्थानेषु महान् संघर्षः जायमानोऽस्ति । अत्याचारस्य हिंसायाश्च अतिक्रमणं जायमानमस्ति। एतत् अस्तित्वतर्जनम् (Existential Threat) एव वर्तते ।तालिबान् इत्यस्य अलकायदा, अलकायदा इत्यस्य ISIS इति न केवलं नामपरिवर्तनम्। **एतत् आतंकवादहिंसायाश्च निश्चितं रूपं, यत्र विचित्रैः मार्गैः विनाशमार्गानुसरणं विकसितं भविष्यति।** ''तालिबान्'' इत्यस्य अर्थः भवति ''तालिम बान् ।'' पठनशीलः विद्यार्थी। विद्यार्थी एव अल–कायदा रूपेण परिणमते।'' अलकायदा इत्यस्यार्थः ''कश्चित् न्यायव्यवस्थानियमः (कानून) निर्मितः भवेत् इति ।इदानीं सः विद्यार्थी न स्थितः ।स तु ''इस्लामिकस्टेट'' तथा ''खिलाफत'' इत्यादि विषये एव भाषते ।एषा आतंकवादस्य प्रगतिः (Progression) वर्तते ।

आतंकवादः पर्यावरणं विनाशं प्रति नयन्नस्ति ।आर्थिकरूपेण दौर्बल्यं, शिरसि विद्यमानं ऋणम्, धनविषयिणी व्यापारविषयिणी वा विश्वस्तरे मन्दायिता स्थितिः, विश्वस्य पुरस्तात् मुखं प्रसार्य अवतीर्णा वर्तते । ब्रिटेन राष्ट्रस्य युरोपियन् संघठनतः पृथग्भवनम् इति विषये

जनाः किं कथयन्तः आसन् न जाने । अर्थतज्ज्ञाः (Economists) कथयन्तः आसन् किं क्रमव्यतिक्रमितं भविष्यति न जानीमः यतोऽहि विश्वस्यैव अर्थव्यवस्था (Economists) कोमलावस्थां प्राप्तवती दृश्यते। आत्मानं समृद्धराष्ट्रत्वेन गणयन्तः अपि राष्ट्रा वर्तन्ते ये वत्सरद्वये धरातलसंस्पर्शं करिष्यन्ति । नैतत् भावयामः यत् ग्रीसदेशेन सह यत् अभूत्[९] तत् इटलीदेशस्यापि भवितुं महान् कालः आवश्यक इति । इंग्लंड तथा ब्रिटेनदेशयोः सा स्थितिः आगता अस्ति। अत एव कॅमरूनकृते तादृशः पादनिक्षेपः कर्तव्यः आपतितः यत् ते युरोपियन् संघठनमध्ये स्थास्यन्ति न वा इति ।

आर्थिकं, पर्यावरणीयं तथा आतंकवादसम्बद्धं रूपं प्राप्य समग्रं विश्वं तादृशे मार्गपरिवर्तने आगत्य स्थितमस्ति यत्र मानवतां रक्षितुं मनीषिणः मार्गान्वेषणं कुर्वाणाः दृश्यन्ते । तेषां समीपे अन्यः न कोऽपि मार्गः दरीदृश्यते ।

''इदानीं नाऽस्ति चेत् कदाचिदपि न भविष्यति''इति स्थितौ विश्वमिदम् अधुना स्थितमस्ति । एतादृशे अवकाशगवाक्षे समेषां प्रश्नानां समाधानप्रदानसामर्थ्यं कस्याचित् अस्ति तर्हि तत् भारते, भारतीयसंस्कृतौ च वर्तते ।

आसहस्रवर्षेभ्यः ''सर्वे भवन्तु सुखिनः'' इति तत्त्वं साक्षात्कर्तुं, साक्षात्कृत्य वा, विविधतामभ्युपगम्य सर्वैः सह सम्मिल्य जीवनस्य अयमद्भुतः प्रयोगः भारते कृतः ।'' बहुलवादः, बहुसांस्कृतिक (Pluralism, Multiculture) इत्याद्याः शब्दाः जनैः उच्चार्यन्ते । न जानीमः । ते ज्ञातुमेव न प्रभवन्ति । किन्तु वयम् एकत्वस्य विविधान्



प. पू. श्री गुरूजी वदन्ति स्म, ''राष्ट्रभक्तेः व्रतं स्वीकृत्य, एतत् कर्तव्यं यः करोति स क्षुरस्य धारायाः उपरि चलति, गच्छति इत्येतत् समानमेव ।'' इत्थमसौ दुर्गमः पन्थाः । तस्मिन् कर्तव्यपथि गन्तव्यम् । तस्मिन् पथि चलितुमेव जन्म अभूत् । अतः तस्य अवगमनेन विज्ञानेन एव जीवनस्य प्रारम्भः । तत्कर्तव्यबोधजागरणेन जीवनस्य परिवर्तनं भवति ।

वर्षचतुष्टयवयस्कः बालः कालडीनद्याः तीरे, लघुकुटीरे, शैत्यकालीने क्लेशमये प्रभातसमये सुप्तः वर्तते ।

माता आह्वयति – ''जाग्रहि शंकर ! जाग्रहि।

शंकरः वदति – ''आमम्ब अहं जागरितः अस्मि, इदानीमुत्तिष्ठामि ।

माता जलपूरणाय बहिर्गमनवेलायां पुनः कथयति, ''जाग्रहि शंकर, जाग्रहि !''

शंकरः पुनः वदति – ''आमम्ब, उक्तं खलु जागरितोऽस्मि इदानीमेव उक्तम् ।''

माता तृतीयवारं पुनराह्वयति – ''जाग्रहि शंकर, जाग्रहि !'' इदानीं शङ्करः प्रत्युत्तरं न ददाति । सः स्वमनसि एव आलोचयति ।'' जागरित एवाऽस्मि, भाषमाणः, अस्मि, प्रश्नानां समाधानानि यच्छन्नस्मि, अथापि माता जाग्रहि इति कथयति । अस्याः निद्रायाः जागरणं न वदति चेत् का सा निद्रा यस्याः जागरणमुच्यते ।

मात्रा प्रदत्तं समाधानं न ज्ञायते इतिहासमुखेन इति सत्यम् । किन्तु एतस्य प्रश्नस्य समाधानेनैव सुभाषस्य जीवनं परिवर्तितं, स्वकर्तव्यबोधः तेन तदा एव प्राप्तः ''किमर्थं मम जीवनम् इति।'' मम किं कर्तव्यम् इति बोधे प्राप्ते, सुभाषस्य जीवनं परिवर्तितम् ।तद्दिने सुभाषः महापुरुषत्वसम्पादनप्रक्रियायां स्वभावतः संलग्नः ।समग्रं सुभाषजीवनं कर्तव्यबोधस्यैव जीवनम् ।अत्यद्भुतं जीवनं वर्तते।

कर्तव्यबोधः असिधारासमानः भवति ।तस्य तैक्ष्ण्यमुभयपार्श्वतः भविष्यति ।कठोपनिषदि यमनचिकेतसोः संवादः वर्तते ।संवादसमाप्तिः तेन मन्त्रेण भवति यः मन्त्रः विवेकानन्दस्वामिनाम् अतीव प्रियः आसीत् ।

मन्त्रोऽसौ, –''उत्तिष्ठत ! जाग्रत !! प्राप्यवरान्निबोधत !!! – उत्तिष्ठन्तु ! जागरूकाः भवन्तु !! श्रेष्ठानां, ज्ञानिनां समीपे उपविश्य ज्ञानार्जनं कुर्वन्तु'' इति बोधयति।

विवेकानन्दस्वामिपादैः तदर्थे किञ्चित् परिवर्तनं कृत्वा उक्तं – ''ध्येयप्राप्तिं यावत् गतिं न स्थगयन्तु''इति किन्तु तदग्रिमा पङ्क्तिः एतन्मन्त्रस्यान्तिमं वाक्यमतीव महत्त्वपूर्णं वर्तते ।तदस्ति ''क्षुरस्यधारा निशिता दुरत्यया दुर्गं पथः तत् कवयो वदन्ति।'' (कठोपनिषद् 1.3.14) अयं कर्तव्यबोधस्य पन्थाः कथमस्ति? क्षुरस्य धारा इव । उपनिषत्सु ''कविः'' शब्दः ज्ञानिनः पर्यायवाची। यस्य ईश्वरसाक्षात्कारः जातः स ''कवि'' इत्युच्यते। यः यत्किञ्चित् रचयति काव्यं, न स कविः ।अत एव ''कविभिः उक्तम्'' नाम ज्ञानिभिः, ईश्वरद्रष्टुभिः ऋषिभिः उक्तं यत् दुर्गमः अयं पन्था इति ।



आयामान् अवगच्छामः । मूल्यवद् वस्तु तदिति मत्वा उत्सवात्मना मन्महे। We celebrate diversity.

चंदेरीमध्ये सिल्कशाटिकावस्त्राणि निर्मीयन्ते । कांजीवरम् तथा बनारसवत् चंदेरी अपि विख्याता अस्ति समग्रे प्रपञ्चे तस्याः नयनादिकं व्यापारादिकं भवति । एकदाऽहं मध्यप्रदेशस्य राजगडे रात्रौ वासमकार्षम्। तत्र कस्यापि व्यापारकुशलस्य गृहे आसम्। ते चंदेरी शाटिकानां निर्यातं (Export) कुर्वन्ति स्म ।मया तेषां कर्मकराणां दर्शने इच्छा प्रदर्शिता ।

तैरुक्तं ''बहु समीचीनः अवसरः अधुना तु अलाव (Camp Fire) चलति''

तेषां कश्चिदुत्सवः आसीत् ।अलाव उत्सवनिमित्तम् आसीत्। अग्नेः चतसृषु दिक्षु नृत्यगीतादिकं जायमानम् आसीत् ।

अहं तत्र गत्वा उपविश्य तत्रस्थकर्मकरैः सह चर्चा कर्तुमारब्धवान् । चतुर्दशपञ्चदशवयस्कः कश्चित् बालः अपि तत्र आसीत् ।

मया सः पृष्टः– ''किं भवानपि कर्मकरः भविष्यति?'' तेनोक्तं ''आम्'' तथैव अभिमानपुरस्सरं स स्वीयं पॅटर्न (निर्माणकौशलेन निर्मितं कौशलप्रकारम्) दर्शयामास ।ते प्रकाशयितुं (प्रिंटिंग) काष्ठोपरि पॅटर्न निर्मान्ति।

तेनोक्तं ''एते षोडशप्रकाराः मया निर्मिताः सन्ति।''

पञ्चदशे वयसि षोडशप्रकाराः निर्मिताः । एकैकस्मिन्नपि परिवारे एतादृशाः कर्मकराः आसन् । तेषु केचित् यवनाः सञ्जाताः इदानीं केचन हिन्दवः सन्ति । आधिक्येन यवनाः सञ्जाताः। अथापि ते सर्वासामपि परम्पराणां रक्षणं कुर्वाणाः दृश्यन्ते । धर्मः परिवर्तितः किन्तु परम्पराः रक्षिताः सन्ति । गणेशपूजया एव प्रारम्भः । पूजाभावे शाटिकानिर्माणम् अपि सम्यक् न भवेदिति ते मन्यन्ते । कस्मिन्नपि गृहे पुत्रः द्वादशवर्षीयः भवति तदा तस्य कृते दीक्षा प्रदीयते Initiate करणं भवति, कर्मकरत्वं सेत्स्यति न वेति निश्चितं भविष्यति। एतत् इनिशिएशन् बहु सुन्दरं भवति । द्वादशवर्षीयं जनं नूतनं ''पॅटर्न'' निर्मातु इति वदन्ति। छापासहाय्येन यदि सः नूतनं पॅटर्न निर्मास्यति तर्हि सः कर्मकरः भविष्यति अन्यथा सः सहायकः भविष्यति ।

(अत्र संस्कृतानुवादे ''कर्मकरः'' इति शब्दः ''कारीगर'' इत्यस्य पर्यायवाची सहायकः''मजूरवाची'' विद्वान् परिवर्तयितुं प्रभवति।

''आयासाय परमकर्म'' इति अस्यार्थः यदि भवतां कर्म भवतां मुक्तिं न जनयति तर्हि बन्धनं जनयिष्यति । विमुक्तिप्रदायिनी विद्या सा या मूल्यस्याभिवृद्धिं कारयिष्यति ।

द्वादशवर्षीयं छात्रं प्रति (बालं प्रति) उच्यते सावधानतया नूतनं पॅटर्न (डिझाईन) कलात्मकं वस्तु निर्मातु इति । इयं भारतीया परम्परा। विविधतायाः सम्मानमेव आतंकवादस्य निर्मूलनाय एकमात्रोपायः। इयं संस्कृतिः अस्मद्देशे सहस्राधिक वर्षेभ्यः विद्यते। "It's our experience that we have to share with the humanity" इयमस्माकमैतिहासिकी अनुभूतिः । ऐतिह्यसाक्षात्कारोयम्।



कर्तव्यबोधं बोधयित्वा सुभाषवर्यैः आझादहिन्दसेना जाग्रदवस्थां प्रापिता । आझादहिन्दसेना अपजयं प्राप्य बन्धने पतितानां योद्धृणां सहाय्येन निर्मिता आसीत् । पराजितेषु कारागारे बद्धेषु उत्साहं प्रपूर्य सेनानिर्माणं क्रियते इति मृतेषु प्राणसञ्चरणमेव । एतत् कार्यं सुभाषचन्द्रबोसः कर्तुं प्रभवति परमात्मज्जीवनेऽपि कर्तव्यबोधः वर्तते।

श्रीकृष्णसरलेन विरचिता ''कालजयी सुभाष'' इति नामधेया रमणीयतमा पुस्तिका वर्तते । यदि सुभाषचन्द्रबोसस्य वास्तविकं जीवनचित्रं दृष्टुम् इहते तर्हि तां पुस्तिकामवश्यं पठेत् । तस्मिन्नेकं पत्रं प्रदत्तं वर्तते । पित्रा महत्या इच्छया आंग्लशासनप्रचालितायां निवासपाठशालायां (बोर्डिंगस्कुल) सुभाषः प्रेषितः। तत्रोषित्वा सः इंडियन सिविल सर्विसेस इत्यस्य अद्यतन भारतीयप्रशासनिकसेवाक्षेत्रस्य उत्तमाधिकारी भविष्यतीति तद्भावः आसीत् । तत्प्रशिक्षणार्थं सुभाषः प्रस्थितः। त्रयोदशवर्षवयस्कः बालः स्वमातरं पत्रमुखेन पृच्छति ।

बालसुभाषः मातरं पृच्छति – ''मातः, त्वया नवमासपर्यन्तं गर्भे अहं धारितः । स्वीयं दुग्धं मत्कृते पायितम् ।'' ब्रूहि मम जीवनस्य उद्देश्यम् अस्ति किमिति? ''ब्रूहि किन्निमित्तं मम जन्म'' इति?

त्रयोदशवत्सरवयस्कः सुभाषः मातरं पृच्छति ''मम जन्म किमर्थमभूदिति?।''

सुभाषः अग्रे लिखति ''पित्रा उच्यते ICS भव, अर्थात् मम परतन्त्रराष्ट्रस्य इतोऽपि पारतन्त्र्यं जनयितुम् आङ्ग्लानां सेवां कुरु इति । किमम्ब आङ्ग्लानां सेवायाः कृते त्वया एतत् जन्म प्रदत्तं वर्तते? मम जीवनस्य उद्देश्यं किमिति ब्रूहि।''

कोऽपि ध्वनिः वर्तते । ध्वनिक्षेपकः स्वयं वक्तुं न प्रभवति, It's a loud speaker which does not speak ! अर्थात् ध्वनियन्त्रस्य कर्तव्यम्, तस्य जीवनध्येयम् अन्यस्य ध्वनेरभिवृद्धिः एव । वयं श्रान्ताः विश्रान्त्यर्थं सुखेन आसन्दम् उपविशामः ।[39] आसन्दस्य कर्तव्यं, जीवनलक्ष्यमुद्देश्यं यत् – तदुपरि उपविष्टस्य सुखप्रदानम् इति । न स्वस्य । अचेतनः आसन्दोऽपि नाऽत्मानं सुखयति । अचेतनं ध्वनियन्त्रमपि नात्मानं सुखयति । तर्हि कथं चेतनः मनुष्यः स्वस्य कृते जीवितुं प्रभवति? अतः कर्तव्यं सर्वदैव परस्य कृते भवति । अतः येषां विवेकानंदस्वामिचरणानां जन्मदिने वयं कर्तव्यबोधपक्षः (कर्तव्यबोधपखवाडा) इत्यस्य प्रारम्भं कुर्मः । ते स्वामिणः भणन्ति –''

They alone live who live for others.

ये परेषां कृते जीवन्ति वस्तुतः ते एव जीवन्ति अन्ये तु मृतप्रायाः चलन्तः, भ्रमन्तः, हसन्तः, क्रीडन्तः, गायन्तः वदन्तः मृतशरीरवत् एव । वयं तदैव जीवामः यदा वयं परेषां कृते किमपि कुर्मः । अयं कर्तव्यबोधः स्वामिनः विवेकानन्दानां जीवनाधारः । एतदेव कार्यं नेताजी सुभाषचन्द्रबोसमहाभागेन कृतम् । सुभाषवर्यैरपि मृतप्रायाणां जीवने प्राणज्योतिः प्रज्वलिता । सुभाषचन्द्रबोसस्य सेना आझादहिन्दसेना तैः जनैः पूरिता निर्मिता च आसीत् ये जनाः आंग्लविरोधिजनैः युद्धस्थगितिसेनात्वेन कारागारे बद्धाः आसन् । ते भारतीयाः सैनिकाः ब्रिटिशसेनायां विद्यमानाः, जपान तथा जर्मनी देशेन सह युद्धे पराजिताः आसन् कारागृहे बन्धिताः च आसन् । तेषां बद्धानां मनसि राष्ट्रभक्तेः दीपः बोसवर्येण प्रज्वलितः ।



एतदनुभवस्य समग्रे विश्वे प्रचारः प्रसारश्च भवेत् । यावद्वयं समर्थाः न भविष्यामः तावत्पर्यन्तं तत्प्रसारशक्तिः अस्माकं निकटे न भविष्यति । यावद्वयं समर्थाः न भविष्याम तावत्पर्यन्तं को वा अस्मद्वचनं श्रोष्यति ।

जपानस्थिते टोकियो विश्वविद्यालये गुरूदेवानां कृते भाषणावकाशः न प्रदत्तः । यदा रविन्द्रनाथ ठाकूरवर्याः भाषणार्थं प्रस्थिताः तदा छात्राः तान् वर्गं प्रति प्रवेष्टुमवरोधं कृतवन्तः । कारणञ्च उक्तवन्तः यत् – ''यः स्वराष्ट्रं मोचयितुं न समर्थः सः अस्मभ्यं किं मोक्षं प्रदास्यतीति? परतन्त्रराष्ट्रस्य नागरिकस्य मुखात् मुक्तिविषयं वयं न श्रोतुमिच्छामः'' । यावत्पर्यन्तं भवतां सामर्थ्यं न भविष्यति तावत्पर्यन्तं विश्वे भवतां वाक्यं न कोऽपि श्रोष्यति । तत्सामर्थ्यं भवन्तः केवलं शोधम् अन्वेषणमनुसन्धानम् इत्यादिद्वारा एव प्राप्तुं प्रभवन्ति, त्रयाणामपि अपेक्षा वर्तते । प्राचीनगवेषणीयं चेत् शोधः अपेक्षितः । नवीनस्य तथ्यस्यापि गवेषणं कर्तव्यं वर्तते । प्राचीनस्य गवेषणमात्रेण न तथ्यं सेत्स्यति । अतः नवीनस्य अन्वेषणं कर्तव्यम् । सिद्धान्तस्य व्यावहारिकीमुपयोगितां साधयितुं तस्य जीवने अन्वयः अनुसन्धानेन भवतीति अनुसन्धानमपि अपेक्षते । भविष्योन्मुखविचारेण विना प्राचीनविषये वार्ता न कर्तव्या । भारतीयपरम्पराणां तद्विषयिणी सिद्धिः पूर्वमेव वर्तते इति ज्ञानं तस्य मान्यतायाम् (Validation) अपि न पतन्तु । तस्याद्य कोऽपि उपयोगः नाऽस्ति । उपयोगः अस्ति चेत् मान्यं (Validate) कुर्वन्तु केवलं ''वयं महतीं परम्परां प्राप्तवन्तः' अस्माकं विज्ञानं प्रगतेः उच्चशिखरं प्रति प्राप्तमासीत्'' इत्थंरूपेण प्रपञ्चस्य कृते विज्ञापयितुमेव कोऽपि वैज्ञानिकक्षेत्रे कष्टं प्राप्नुवन् समयं यापयितुं यदीच्छेत् तर्हि

भारतीयशिक्षणमण्डलस्य कृते तेन सह यापयितुं समयः नास्ति यतो हि वृद्धायाः चित्रसञ्चिकायाः (Photo Album) न काऽपि महत्ता भवति।

''युवावस्थायामहं बहु सुन्दरी आसम् अधुना मम मुखाद्यङ्गे पेलवत्वं नाऽस्ति।'' इत्यादिरूपायाः वृद्धायाः चित्रसञ्चिका नाऽत्र कार्यकरः दृश्यते । वयमितिहासम्अस्मत् गौरवाभिवृद्धयर्थं नोपयुञ्ज्महे।

पाराशरऋषेः ''यंत्रसर्वस्व'' ग्रन्थे वैमानिकं प्रकरणं प्राप्यते । तदुपरि अध्ययनं तदा कर्तव्यं भविष्यति यदा पारदाधारितं (Mercury) यन्त्रं वर्तमानविमानव्यवस्थायां सहायभूतं भविष्यति । नोचेत् ''अस्माकं निकटे विमानादिव्यवस्था आसीदिति'' प्रपञ्चकरणस्य सापेक्षता न वर्तते। श्रद्धया एव अङ्गीकुर्वन्तु । कोऽपि यदि नाङ्गीकरोति चेत् तद्कण्ठावतरणं कर्तुं यत्नः न कार्यः। अथापि अस्माकं विज्ञाने, अस्माकं धातुशास्त्रे तादृशाः विषयाः निगृहिताः सन्ति ये चन्द्रगुप्तविजयस्तम्भवत् चमत्कारपूर्णा संरचनां जनयितुं शक्नुवन्ति।

तस्य धातुशास्त्रस्याद्यतनीयः विकासः विचारयोग्यः अस्ति । रांचीमध्ये तस्य प्रयोगः अस्माभिः दृष्टः। वनवासिभिः इषुकृद्भिः (लोहारजनैः) लौहायस्कात् लौहम् 700 (डिग्री) पर्यन्तमेव निष्कासितम्। वर्तमानकाले 1200 डिग्री तापदाने शुद्धलोहः निर्गच्छति। एतत्कृते कियत् अंगारकः (carbon) ज्वालनीयं भविष्यति कियत् अंगारकं मूलचिह्नं (Carbon Foot Print) त्यक्तव्यं स्यात्? तत्स्थाने 700 डिग्री पर्यन्तमेव शुद्धम्, अमिश्रितं, वर्णालोकनम् (Chromium Plating) इत्यस्य मिश्रणेन विना इस्पात (Steel) सदृशं चकचकायमानम् आयरनं (लोहम्) उत्पादयितुं सापेक्षं विज्ञानमस्मद्वनवासिनां निकटे अस्ति।



चतुर्थः मैथुनम् । स्वसदृशस्यान्यस्य कृते जन्मदानविषयिणी कामना । एते चत्वारः विषयाः मनुष्ये पशौ च समानाः सन्ति । तथापि मनुष्ये विशेषता का वर्तते।

सुभाषितकारः वदति ''धर्मो हि तेषामधिको विशेषो'' अर्थात् धर्म एव मनुष्यस्याधिका विशेषता ।

कोऽयं धर्मः? यत् कर्तव्यं स धर्मः । पितुः पुत्रं प्रति यत् कर्तव्यं स पितृधर्मः। पुत्रस्य पितरं प्रति यत् कर्तव्यं स पुत्रधर्मः । पार्श्वजनं प्रति यत् मम कर्तव्यं यः व्यवहारः स पार्श्वजनेन सह विधेयः, धर्मः नाम कर्तव्यम् । धर्मस्यात्यन्तमहत्त्वपूर्णः अयमर्थः। अतः धर्मबोधः तदैव भवितुमर्हति यदा कर्तव्यबोधः भवति । अतः कर्तव्यं नाम करणीयं तथा करणीयं यत् तन्न स्वं प्रति अपि तु परं प्रत्येव । सरलमेवैतत् । कस्यापि जीवनस्य लक्ष्यम् उद्देश्यं स्वं प्रति न भवितुमर्हति । स्वार्थीभवनं न सम्भवति। You can not exist being selfish भवन्तः स्वार्थपरायणाः भूत्वा जीवितुं न प्रभवन्ति । अयमेव त्यागः सृष्टेः नियमः । त्यागादेव सृष्टिर्भवति । त्यागादेव सृष्टिः चलति । प्रकृतौ प्रपञ्चे वा अचेतनमपि न स्वार्थम् उपलक्ष्य कार्यं करोति ।

सर्वदैवाहं तदुदाहरामि । एकस्याचेतनस्य ''माईक'' इति ध्वनि यन्त्रस्यापि अस्तित्वं प्रति कारणं वर्तते । उद्देश्यं वर्तते, हेतुः वर्तते । केनचित् कारणेन इदं ध्वनियन्त्रं निर्मितं स्यात् । कः हेतुः? ध्वनिक्षेपणम् ध्वनौ वृद्धिं कृत्वा तल्लोकपर्यन्तप्रसारणं हेतुः । ''लाउडस्पीकर'' तदर्थमुच्यते यत् यद् उच्यते तत् (लाउड) उच्चैः प्रकाशयति । किन्तु ध्वनियन्त्रं कस्य ध्वनिं वर्धयति वक्तुः नात्मनः । ध्वनियन्त्रस्य स्वस्य न

स्वकर्तव्यं पालितमस्ति अतः अहं योग्यतां प्राप्तवानस्मि । अतः अधिकारोऽपि कर्तव्यादेवागच्छति। इयं भारतीया संकल्पना वर्तते ।अतः कर्तव्यबोधः जीवनस्य दिशाप्रदायकः सार्थकताप्रदायकः बोधः । यावत्पर्यन्तं कर्तव्यस्य बोधः न जातः। स्वविकासः इत्यस्यार्थः कर्तव्यज्ञानम् इति । कर्तव्यशब्दं विभज्य पश्यामश्चेत् संस्कृते तदर्थः भवति कर्तुं योग्यम् । मम कृते किं कर्तुं योग्यमस्ति । मया किं कर्तुम् उचितम् ।मम किं कर्तव्यम् ।यदा इयं कर्तव्यविषयिणी वाक् समधिगता भविष्यति तदा मनुजः मनुजात्मना स्थास्यति । यावदेतत् न जानाति तावत् स पशुः एव ।केवलं वासनामुखेन सः जीवनं यापयति ।

''आहारनिद्रा भयमैथुनं च सामान्यमेतत् पशुभिर्नराणाम् ।''

आहारः – बुभुक्षा जायते इत्यत उदरपूर्तिः ।

निद्रा– श्रान्तिः भवति इति हेतोः स्वापः ।

(अस्मासु बहुन्यूनसंख्याकाः जनाः श्रान्तिकारणात् निन्द्रान्ति, अत्यधिकाः आलस्येन एव निद्रान्ति।) किन्तु श्रमहेतोः स्वापः स्वाभाविकः शरीरधर्मः।

भयं– कष्टात्, मृत्योः, असुरक्षितभावनायाः कारणात् च ।

सुविधां त्यक्त्वा असुविधां नेच्छन्ति जनाः अतः भयादेव अङ्गीकारं कुर्वन्ति । मृत्युभयादपि पुरतः विद्यमानस्य प्रस्तावः अङ्गीक्रियते ।



तद्विषयकमनुसन्धानं भवेत् । तद् पर्यावरणस्य रक्षणाय उपयुक्तं भविष्यति । तादृशं स्टील वयम् अल्पोर्जाव्ययेन निर्मास्यामः यदधिकमुपयोगं प्राप्स्यति । यद् मलापगमरहितं तथा प्रकृतेः अविकृतताजनकं भविष्यति ।तदुपरि संशोधनं कुर्वन्तु तद् भविष्योन्मुखम् अनुसन्धानं वर्तते । केवलम् ''अस्मन्निकटे आसीदिति वक्तुम्'' अनुसन्धानं न अपेक्षते । अतः वर्तमानकालीनसमस्यायाः समाधानं प्रयच्छन्ति भविष्यद्रचनानुगुणा या दृष्टिः केवलं ''वयं महान्तः आस्म'' इति वक्तुं ज्ञानपरम्परायां दृष्टिक्षेपं स्थापयन्ती भारतीयता न इति ब्रूमः।

शास्त्रावगमनेन दृष्टिविकासः भवेत् । दृष्टिश्च प्रकृतिप्रेम्णा समग्रतायाः, एकात्मतायाश्च साहाय्येन प्राप्तव्या वर्तते ।इयं दृष्टिः प्रकृतेः शोषणमपि न करोति, दोहनमपि न करोति । प्रकृत्या सह समन्वयेन जीवनयापनं विदधाति । केनचित् बहु युक्तमुक्तम् ''आधुनिकविज्ञाने विश्रामार्थं निर्मितानि वस्तूनि अपि प्रकृतेः विनाशं कुर्वन्ति।''

येषु आसन्देषु वयमुपविशामः तानि आसनानि, ते आसन्दाः सुखं दातुं निर्मिताः सन्ति तेषां कारणात् कियत् सुखं लभ्यते इत्यन्यो विषयः। आयुर्वेदयोगतज्ज्ञाः ब्रूयुः आसन्देषु अधिकमुपवेशनमेव spondilysis कारणमस्तीति ।अतः अहं आसन्दोपरि अपि स्वस्तिकासानसदृशे आसने उपविशामि ।

यतो हि अहं बहुदिनानि यावत् स्वीयां कटिं रक्षितुम् इच्छामि। कार्यं कर्तव्यमस्ति मया । आगामिनि काले 50000, 100000 लक्षाधिकवर्षपर्यन्तमिदमासनम् (chaird) प्रकृतौ पुनः एकाकारं (degrade) न भविष्यति ।अयमर्थः – अयमासन्दः प्रकृतेः विनाशं कृत्वा

अस्मान् तोषयन् वर्तते इति ।अन्यत्र तु अस्माभिः निर्मितानि अस्त्राण्यपि आधिक्येन प्रकृतिविनाशजनकानि नासन् । केवलं शत्रुविनाशपराणि आसन् ।अस्त्राण्यपि जैवनाशनयोग्यानि (Bio-degradable)आसन् ।

तैः उक्तम् महाभारते अश्वत्थाम्ना ब्रह्मास्त्रं स्वीकृतम् । तदा तदवरोधं कुर्वाणाः व्यासमहर्षयः अर्जुनंप्रति ऊचुः – ''एकं ब्रह्मास्त्रमेवाऽस्ति यत् प्रकृत्या सह न मिलति । अतः तदुपयोगः चरमावस्थाप्राप्तौ अत्यन्तापेक्षायामेव कर्तव्यः ।अर्जुन, त्वंतु जानासि, अत एव तत् कुरु इति ।

ब्रह्मास्त्रं विहाय अन्यानि सर्वाण्यपि अस्त्राणि तादृशानि आसन् यानि प्रकृतेः विनाशं न जनयन्ति स्म।अत्र विकासार्थं विद्यमानाः विषयाः विनाशं जनयन्ति । विनाशार्थं निर्मितमपि प्रकृतिं न शोषयति। इयं आधुनिकी दृष्टिः शास्त्रस्य कृते, विज्ञानस्य कृते देयं विज्ञानम् (Science) एतदेव पुनरुत्थानम् (Resurgence) इति उच्यते।

प्राचीनशोधनमेव पुनरुत्थानम् (Resurgence) इति न ।अनया दृष्ट्या तु आधुनिकमनुसन्धानमपि पुनरुत्थानम् (रिसर्जन्स) एव। वनवासिनां विच्छेदकरमनुसन्धानं (रिसर्च) कृतम् ।तेषां मानसक्षेत्रजनकं कृतमनुसन्धानम्। पूर्वतनानां सप्ततिवर्षाणां ICSSR, Ph.D. अनुसन्धानविषयाः कथयन्ति यत् ''एतत् एतत् जिलावासिनां वनवासिनामार्थिकशोषणस्य सामाजिककारणाणामध्ययनं कुर्वन्तु इति।

किञ्चिदालोचयन्तु ''तेन संशोधनेन किं साधितं भविष्यति? अस्माभिः भवन्तः पीड्यमानाः सन्ति इति भावनां पूरयित्वा नक्षलवादः उत्पादितः।नक्षलवादः इत्युक्ते नान्यत् किञ्चित् अपितु I am a Victim



अस्माभिः स्वीयं तन्त्रं न दत्तमस्ति अतः भारतमस्तिचेदपि भारतीयता नाऽस्ति ।किमर्थं? यतो हि कर्तव्यं महत्त्वपूर्णं नास्ति ।

अस्य देशस्य व्यावहारिकहिन्दीभाषायां संस्कृतस्य यः ''अधिकार'' शब्दः सः अधिकारशब्दः आंग्लशब्दस्य Right इत्यस्य न यथावदनुवादः । वस्तुतः कस्यामपि भारतीयभाषायाम् आंग्लभाषायाः Right शब्दस्य यथावत् अनुवादः न भवितुमर्हति ।सामान्यतः Human Rights अथवा कस्यापि पुरुषस्य Rights इति शब्दप्रयोगः अस्माभिः क्रियते । अतः बहुवारं मया भाष्यते Right शब्दस्य स्थाने अधिकारशब्दप्रयोगः न कर्तव्य इति ।यस्यां कस्यामपि भाषायां Right शब्द एव प्रयोक्तव्यः।

यदा वयं Right & Duties, fundamental Rights इत्यादि विषये भाषामहे तदा Right इत्यस्य अर्थः – मह्यं तद् लभ्येत ।मया तत् लब्धव्यम् इति ।संस्कृते अस्मिन्नर्थे अधिकारशब्दः न प्रयुज्यते । संस्कृते अधिकारशब्दस्य qualification इति अर्थः भवति ।अयं पुरुषः वेदाध्ययने अधिकारी, अयं पुरुषः प्राचार्यपदविकां प्राप्तुमधिकारी इत्यादि । सः अधिकारं प्राप्तवानस्ति स एतत् कार्यं कुर्यात् ।अधिकारप्राप्तेरर्थः He is qualified सः स्वकर्तव्यं तथा पालितवान् यथा तस्मिन् योग्यता आगता । सः अधिकारी सञ्जातः अस्मिन्नेवार्थे संस्कृते तथा भारतीयभाषासु अधिकारशब्दस्य प्रयोगः भवति। अतः भारते यदा वयमधिकारस्य विषये ब्रूमः तदा सः कर्तव्येन सह संयुक्तः भवति Rights शब्दः पृच्छां करोति ।हस्तौ प्रसारयति ।भवन्तः सर्वकारं प्रति पृच्छन्ति ''एतन्मया कर्तुं शक्यम् अयं मम Right अस्ति । भवन्तः मां यच्छन्तु इति।'' ''अधिकारः'' इत्थं न कथयति । अधिकारः वदति। ''मया

India) इति संविधानेन एव उच्यते । तस्य भारतस्य संविधाननिर्मातृणां सभा किं मनसि निधाय स्थिताऽसीत् इति द्रष्टुं मया तदवलोकितम् । पठनोत्तरं मम बहु दु:खमभवत् । संविधानसभायां स्थितानामनेकानामाग्रहोत्तरमपि यानि मूलभूतानि एकादश कर्तव्यानि तानि न्यायशास्त्रेण साध्य (enforceable by law) रूपेण न सन्ति । विधिमुखेन तदनिवार्यता सम्पादनं न कृतम् । अतः कश्चित् कर्तव्यपालनं न करिष्यति चेत् तस्य दण्डः न भविष्यति । कर्तव्यानि केवलं सूचनात्मना स्थितानि सन्ति । अधिकाराश्च दण्डदानसमर्थाः जाताः। यदि कस्यचिदधिकारस्य खण्डनं भवति तर्हि सः न्यायार्थं धावति । परन्तु स एव पुरुषः कर्तव्यपालनं न करोति तर्हि सर्वकारः प्रष्टुं न प्रभवति यत्त्वया किमर्थं राष्ट्रियकर्तव्यस्य पालनं न कृतम् इति ।

अत्यन्तायां मानसिक्यां दुःस्थितौ राष्ट्रस्य स्वातन्त्र्योत्तरं निर्माणमभवत् । यस्य परिणामं पश्यन्तः स्मः। सप्तदशकानन्तरमपि न कश्चिदपि आत्मानं स्वतन्त्रोऽस्मि इति भावयति । अधिकारवान् स्वतन्त्रः भवतीति भ्रान्ता कल्पनेयम् । व्यक्तिस्वातन्त्र्यं व्यक्त्याधिकारेण न अपि तु कर्तव्यपालनेन लभ्यते । कर्तव्यपालनमेव मुक्तिं दास्यति । भगवद्गीतायाः एव अयं सन्देशः । यदारभ्य अधिकारापेक्षया कर्तव्यपालनस्य महत्त्वमस्माभिः न्यूनीकृतं तदारभ्य बन्धनानि अस्माकं वर्धितानि । वयं बद्धाः सञ्जाताः । अत एव स्वातन्त्र्योत्तरसप्तषष्टिवर्षानन्तरमपि वयं वैदेशिकविचारे वैदेशिकसंकल्पनायां तथा बद्धाः स्मः येन राष्ट्रे ''स्व'' तन्त्रम् अधुनाऽपि नागतम् । स्वतन्त्रशब्दे शब्दद्वयं वर्तते । ''स्व'' तथा ''तन्त्रम्'' इति ।



इति भावः ।'' यः वनवासी समग्रां प्रकृतिं प्रेम्णा पश्यति स्म, ''सर्वा भूमिः गोपालस्य'' इति भावनया युक्तः लघ्वाच्छदकं कौपीनादिकं धृत्वा सानन्दं प्रपञ्चस्य स्वामित्वं प्राप्य विहरति स्म सः अस्माभिः बोधितः यत् जनाः भवतः शोषणं कुर्वन्तीति। दृष्टेरेव भेदः ।

कट्टीमनी[10] महोदयैः अत्यन्तं सुन्दरं वचनमुक्तम् आसीत् । सत्यं भारतीयत्वमद्यापि जीवति किन्तु अस्पृष्टरूपेण इति । अनुसन्धानं विधेयं चेत् तस्य परिपोषकं तद् भवेत् । संयोजकम् अनुसन्धानं स्यात्। ''निशि'' तथा ''आपातानी'' इति अरुणाचलप्रदेशस्थितजनजातीयानां कृते बोधनीयं स्यात् यत् संघर्षापेक्षया तेषु समानता का वर्तते इति । एतादृशमनुसन्धानं कुतो न कुर्वन्ति। गौडानां नागानां च परम्परायां सिद्धान्ते च वैचारिकं साम्यं वर्तते । समग्रे भारते एकोऽपि नागाजातीयः पुरुषः वृक्षं न छिनत्ति । समूलं वा न उच्छिनत्ति यतो हि वृक्षः एव तस्य देवता । नागामीज भाषायां प्रार्थनाः उपलभ्यन्ते यासां पठनोत्तरं सः वृक्षान् प्रति कथयति, ''मम गृहे चुल्लिकां ज्वालयितुम् इन्धनमपेक्षते, कृपया शाखामेकां देहि प्रभो ।'' वृक्षः यदि कथयति तर्हि छिनत्ति । आयुर्वेदे अपि प्रार्थनारहितमौषधिसङ्ग्रहणं रोगिणः स्वास्थ्यप्रदं न भविष्यति इति उच्यते । अतः विशिष्टे नक्षत्रे, विशिष्टाः मूलिकाः प्रार्थनापुरःस्सरं छेत्तव्याः। या नागामीज प्रार्थना सा गोंडोजनानामपि वर्तते । तत्समानता ''माडिया'' मध्येऽपि अस्ति । वृक्षच्छेदात् पूर्वं तत्प्राणिनां पूजनं च कार्यमिति। तद्विना वृक्षस्य लघ्वीमपि शाखां न छिन्द्यात् । कुत्र नागालॅण्ड, क्व नागपुरस्य लघु पर्वतमयं स्थानं, क्व झारखंडः, गडचिरोली, क्व छत्तिसगढः । सर्वेषु स्थानेषु समानां परम्परां कुतः प्राप्नुमः?प्राप्नुमः

यतो हि, भारतीयसंस्कृतेः एकत्वसिद्धान्तः समग्रे राष्ट्रे वर्तते । सा एव विशेषता अस्माकं सविधे वर्तते।

तुलसीवृक्षे जलदानं कुतो विहितम्? अद्यतनकाले whatsapp माध्यमे प्रचलति यत् – श्रावणसोमवासरे बिल्वपत्राणि उच्छेद्य भवन्तः वृक्षं नाशयन्ति इति । तदा केनचित् वृक्षायुर्वेदस्य श्लोकाः प्रदत्ताः उक्तञ्च अस्मिन् ऋतौ बिल्ववृक्षस्य पत्रच्छेदनेन वृक्षफले रसाभिवृद्धिः भविष्यति इति । तत्पृष्ठतः विद्यमानं वैज्ञानिकं कारणमुक्तम् । मया तु उभयोः विषययोः विज्ञानं नावगतं वर्तते। यतोऽहि विनाऽनुसन्धानं तत् किमपि निश्चितं न भविष्यति । मूलात्मना सिद्धान्तस्तु एक एवएकत्वसिद्धान्तः–प्रकृतिः मत्तः न भिन्ना वर्तते इति। इदानीं प्रकृतः मम माता । अहं स्वार्थसिद्ध्यर्थं तां नाशयिष्यामि तत्किं मम उद्धारकं भविष्यति वा? मातरं हत्त्वा मम कः लाभः ? कदाचिदपि मातरं हत्त्वा सम्यक् फलमहं न प्राप्तुं शक्नुयाम्। यदैवैतत् ज्ञायेत तदा दृष्टिपरिवर्तनं भविष्यति । तत्रस्थविज्ञानस्य दृष्टिः परिवर्तिता । तत्र विज्ञानमपि तादृशमेव विकसितं भविष्यति यत् प्रकृतेः विनाशकरं न स्यात्। प्रकृत्या सह सामरस्येन विलसेत्।

अतिवृष्टिः (सुनामी[11]) समये अहं दक्षिणदेशे कन्याकुमारीनगरस्थे विवेकानन्दकेन्द्रे आसम् । तत्र सीमाप्रदेशस्थमत्स्यग्राहिणां समूहे कार्यं (सेवाकार्यं) कर्तुमवकाशः लब्धः। तेषां सदनानि उच्छिन्नानि विकीर्णानि च आसन् । नागपट्टणम् अगच्छं तत्र शिवमन्दिरं मात्रमवशिष्टमासीत् । अस्माभिः सह सेवाकार्ये संलग्नाः चेन्नईनगरस्थाः अपि बालकाः आसन् । युवकाः, केचन महान्तः वैज्ञानिकाः, IT क्षेत्रे कार्यकर्तारः इत्यादयोऽप्यासन् । ते सायं ''खिचड़ी''



संयुक्तपरिवारात् विभक्तपरिवारतां प्राप्ता अस्माकं संस्कृतिः इत्यत्रापि स्वकर्तव्यपरित्यागः, स्वकर्तव्यविचारत्यागः इत्येतेदेव कारणम् ।

यदा ''मया किं प्राप्यते'' इति विचारः पुरुषेण क्रियते तदा विभाजनं प्रति गमनमारभ्यते । यदा ''मम किं कर्तव्यम्'' इति, ''मया किं प्राप्तव्यम्''इति विचारः पुरुषेण क्रियते तदा पुरुषाः विभक्ताः भवन्ति। सम्बन्धाः विच्छिद्यन्ते सम्बन्धविभागे समाजविभागः, समाजस्य विभक्ततायां राष्ट्रस्यापि विभक्तता, नाशश्च।

अद्य अस्मद्देशे वयं यावतीः समस्याः पश्यामः तासां मूलं यदि किञ्चिद् स्यात् तर्हि तत् एतदेव यत् अस्मद्देशे स्वातन्त्र्योत्तरम् अधिकाराणां कर्तव्यापेक्षया अत्यधिकं महत्त्वमासीत् । अस्माकं संविधानेन मूलभूताधिकारैः सह मूलभूतानि कर्तव्यानि अपि उक्तानि एतेषामधिकाराणां प्राप्तये वयं संघर्षं कर्तुं प्रभवामः। अधिकारस्यासुरक्षितततायां न्यायालयं गत्वा सुरक्षाविषये पृच्छा कर्तुं शक्यते। विधिशास्त्रस्य विद्यार्थी अहमासम्, इत्यतः मया तत्काले संविधानस्य सभानां परिचर्चाः द्वादशखण्डेषु विभक्ताः सर्वाः पठिताः। (Constituent Assembly Debates)

यद्यपि मम पाठ्यक्रमे नासन् अथापि ते खण्डाः मया पठिताः । पठनसमये मानसमाह्लादितमासीत् । संविधाननिर्मातृणां संविधानस्य किन्निमित्तं निर्माणं कर्तव्यम् इति विषयिणीम् इच्छां ज्ञातुम् अहम् इष्टवान् आसम् । एतद्राष्ट्रमस्माभिः कथं निर्मातव्यम्?

अस्माकं भारतीयानां राष्ट्ररक्षार्थं संविधानं प्रदत्तमिति । संविधानमेव वदति। वयं भारतस्य नागरिकाः (We the people of

# कर्तव्यबोधः।

अखिलभारतीयराष्ट्रीयशैक्षिकमहासंघस्य[20] ''विद्यापीठ–शिक्षणमंच'' द्वारा ''कर्तव्यबोधपक्षः'' इत्यस्य आयोजनं क्रियमाणमस्ति इत्ययं सुखदः संयोगः। सुखदत्वमस्य प्राथमिकशिक्षकानामा**धि**कारः हितञ्च इत्यादिविषये कार्यमनेन संघटनेन सञ्चाल्यते इत्यत एव संघसमुदायः स्वभावतः आन्दोलनं करोति ।अतः आन्दोलने एतादृशं संघटनं कर्तव्यविषये वैचारिकदृष्टया व्याख्यानं कुर्यात् इत्ययं स्वस्मिन्नेवाभिनन्दनविषयः एव अधिकारसुरक्षार्थम्।

अत्यन्तं स्पृहणीयोऽयं विषयः अनुकरणयोग्यश्च ।अत एव यां बुद्धिमाश्रित्य अ.भा.रा. शैक्षिकमहासंघः कार्यं करोति, तथा बुद्ध्यैव समग्रे शिक्षकप्रपञ्चे स्वीयं परिचयं पृथगात्मना स्थापयति । सः परिचयः न केवलं शिक्षकानां हितविषयिणीं वार्तां करोति इत्येव न अपि तु राष्ट्रहितस्यापि भाषां ब्रूते इत्यपि वर्तते ।

यदि राष्ट्रहितविषये वक्तव्यं चेत् केवलाधिकाराणां विषये उक्त्वा न चलिष्यति, कर्तव्यानि च भविष्यन्ति ।यतो हि राष्ट्रनिर्माणं कर्तव्यद्वारा भवति । कर्तव्यं संयोजनस्य कार्यं करोति, अधिकारः संघर्षस्य विभाजनस्य । परिवारः संयुज्यते, यस्मात्, स कर्तव्याश्रितः । परिवारस्याधारः कर्तव्यम् । कर्तव्यपालनमेकैकोऽपि पुरुषः करोति तस्मात् परिवारः सम्यक् तिष्ठति । यद्दिने परिवारे अन्तः अपि अधिकारविषयिणी चर्चा प्रारभ्यते तद्दिने परिवारस्य विभाजनमारभ्यते ।



भोज्यं भुक्त्वा आदिनं श्रमदानं कुर्वन्तः सन्तोऽपि न श्रममन्वभवन् ।दिवा स्वेदायिताः श्रमकारणेन ज्ञाताः सन्तोऽपि रात्रौ गीतानि गायन्तः वयं सर्वे सानन्दम् उपविशामः स्म ।तत्समये तत्र स्वाध्यायः आरब्धः।

चर्चारम्भे सञ्जाते केनचित् आधुनिकेन उच्चशिक्षितेन कार्यकर्त्रा पृष्टम्, ''भ्रातः आधुनिकाः वैज्ञानिकाः कृपामन्धश्रद्धात्वेन गणयन्ति, किं भवन्तः न भावयन्ति यदत्र सर्वेषां गृहाणि जलप्रवाहे गतानि केवलमेकं शिवमन्दिरमात्रमवशिष्टं वर्तते ।अत्र कश्चिदाध्यात्मिकः (spiritual) चमत्कारः न प्रतिभाति ।काचित् तु शिवकृपा स्यात् यस्या सप्ततिफूट उन्नतकायायां त्सुनामीतरङ्गिण्याम् आगतायां सत्यामपि यच्छिवमन्दिरं मात्रमवशिष्टमन्यत् सर्वं जलमयं जातम् ।''

अहमात्मनि मोदं प्राप्नुवन्नासम् । पृष्टवान् ''हे भ्रातःब्रूतां कथमेतत् जातं स्यादिति?''

तेषु कश्चित् विज्ञानमुपस्थापयितुकामः भाषणं कर्तुं प्रायतत । सः विषयः जटिलः अभूत् विवादः सञ्जातः।यदा सर्वेषां स्वीयः अभिप्रायः बहिरागतः तदा मया उक्तं – ''कृपा तु आसीत् किन्तु यथा सर्वे आलोचयन्तः सन्ति न तथा ।कृपा सप्तशतं वर्षेभ्यः प्राक् एतत् मन्दिरस्य निर्मातुः स्थपतेरुपरि आसीत् ।तस्य जनस्योपरि कृपासीत् यः तरङ्गाणां गतिं विज्ञाय दिशायाः भूमेश्च गमनादिकं सम्यक् ज्ञात्वा, सम्यगधीत्य स्थापत्यमान (architectural design) निर्मितवान् यत् अतिवृष्टिः कालेऽपि जीवति।'' अद्यतन स्थापत्याभियन्तारः (structural engineers) एतद्विषये अध्ययनं कुर्युः । एतद्विषयकम् अनुसन्धानं कुर्युः। तदध्ययनं भूकम्पादिसमये कार्यकरं भविष्यति । इयमेव कृपा

नान्या कृपा । प्रकृत्या सह सामरस्यं सम्प्राप्तं शिल्पम् जीवति अस्मिन् देशे इति । कन्याकुमारीनगरे यैः शिलास्मारकं निर्मितं तेषा 2015 मध्ये वयसः 94 वर्षे शरीरं शान्तं सञ्जातम्। केभ्यश्चित् वर्षेभ्यः प्राक् कन्याकुमारीमध्ये ते स्थपतिमहाभागाः श्री. के. आचारी महोदयाः तामिलभाषां भाषमाणा आसन् । अहं शुद्धायां हिन्द्यां तैः सह चर्चा कुर्वन्नासम् । एकघंटाकाले तैः तामिलभाषायां स्थापत्यस्य सौन्दर्यरहस्यावबोधकाः विषयाः विज्ञापिताः ।अल्पमल्पं मयाप्यवगतम्। तत्र एका विशिष्टा मोदप्रदा विवक्षा आसीत्।

वयं कन्याकुमारिस्थविवेकानुसन्धानस्य परिसरे स्थितस्य नालंदानामकग्रन्थालयस्य पुरतः उपविष्टाः आस्म। पुरतः एका व्याघ्रस्य खण्डिता मूर्तिः दृश्यते स्म। जनाः आगत्य उपविशन्ति बालका अपि आगच्छन्ति ।

तां मूर्तिं वीक्ष्य अहमपृच्छम् – ''अस्याः मूर्तेः किं सञ्जातम्?''

तदा तैः उक्तम्, ''येन पाषाणः निश्चितः सः शिल्पी नूतनः स्यात्।

मया पृष्टं, ''कुतः''?

तैः उक्तम् ''तस्य मनसि न आगतं स्यात् ।''

मया पृष्टं, – ''किम्?''

तैः उक्तं – ''एतदेव यत्, तस्य पाषाणस्य लिङगं पुल्लिङ्गं वर्तते उत स्त्रीलिङ्गम् इति । सः स्त्रीलिङ्गात् पाषाणात् सिंहं निर्मातुं प्रवृत्तः अतः न सम्पन्नः।''



निद्रा कथमासीत् इति कथयति । तत् दर्शयति अद्याहं घण्टाचतुष्टयं सुखेन सुप्तवान् । यतो हि भवतां समेषां विचाराः उत्साहः, सहभागः इत्यादिना भवन्तः सर्वे यथा अस्मिन् व्रते सम्मिलिताः सञ्जाताः तेन मम मनसः पूर्णरूपेण शान्तिः सम्पादिता अभवत् । अस्माभिः असम्भवं न किञ्चिद् व्रतमासादितमिति ज्ञातम् । ज्ञानपूर्वकमेतदेव व्रतं स्वीकृतमस्ति। निश्चितरूपेण वयमेतत् करिष्यामः इति मम विश्वासः। विश्वकल्याणार्थमनुसंधानकेन्द्रस्य योगदानं जनयितुं संकल्पपुरस्सरं गमिष्यामः तथा विश्वकल्याणप्रार्थनया कार्यशालां समापयामः।

सर्वे भवन्तु सुखिनः

।।ऊँ शान्तिः शान्तिःशान्तिः ।।

***

तदा 100–125 कार्यकर्तारः न केवलं भारतस्य अपि तु विश्वस्य इतिहासं परिवर्तयिष्यन्ति इति मम विश्वासः।

पूर्वेषु षडविंशंतिः वत्सरेषु मया स्वनेत्राभ्यामत्यधिकाः असम्भवाः चमत्काराः दृष्टाः सन्ति । मध्यप्रदेशस्थाः एककोटिच्छात्राः एकस्मिन् समये सूर्यनमस्कारं कुर्वन्ति । यस्मिन् समये 2007 मध्ये मुख्यमन्त्रिणा उक्तम् ''एवं कुर्वन्तु'' मुख्यशिक्षासचिवःPrinicipal Secretary (Educational) यः आसीत् सः स्वीयेन अहङ्कारेण कथयति ''एतत् न संभवति'' इति

सः वदति, ''मुकुलमहोदय! एते विवेकानन्दकेन्द्रस्य कार्यकर्तारः एव न सन्ति एते अस्माकं सर्वे शिक्षकाः तु वर्तन्ते ।'' (अहं तं शब्दमुच्चारयितुमपि न प्रभवामि ये शब्दाः तैः प्रयुक्ताः)

अस्माभिः उक्तं, ''करिष्यामः। ते एव अध्यापकाः करिष्यन्ति यान् भवन्तः चिन्तयन्ति ।'' तदारभ्य 2007 तः अद्यावधि जनवरीमासस्य द्वादश दिनाङ्के एक कोटितः अधिकाः युवानः छात्राः सूर्यनमस्कारं कुर्वन्ति। अयं चमत्कारः मया मम नेत्राभ्यां दृष्टः वर्तते । अत्र उपविष्टाः नैके कार्यकर्तारः तत्रापि संयुक्ताः आसन् । अस्माभिः कार्यकर्तृभिः एतत् साधितम् अस्ति अतः असम्भवं किमपि नाऽस्ति । उद्घाटितनेत्राभ्यां दृष्टः बृहत् स्वप्नः । It's an ambitious dream, no doubt किन्तु न असम्भवम् ।

भव्यं भविष्यति, दिव्यं भविष्यति, वय संम्मिल्य करिष्यामः इति विश्वासोऽपि वर्तते । कार्यशालायाः अभ्यासवर्गस्य च परम् अस्माकमात्मविश्वासः सहस्रगुणितं वर्धितः । मम सविधे app वर्तते यत्



तैः तस्मिन् दिने प्राणविद्याद्वारेण प्राणशक्त्या पाषाणलिङ्गविज्ञानस्य विधिः उक्तः। यथा मनुजस्य नाडीपरीक्षा क्रियते तथा 'ग्रेनाईट' इति पाषाणस्य अपि हस्तस्पर्शेन लिङ्गं ज्ञायते–सः खण्डः स्त्रीलिङ्गः पुल्लिङ्गः, नपुंसकलिङ्गो वा इति । तदनन्तरं तस्मिन् का मूर्तिः निर्मातव्या इत्येतत् चयनं भवति । इयं विद्या अद्यावधि जीवति ।

प्राणविद्यामधिकृत्य कः अनुसन्धानं करिष्यति ? जगदीशचन्द्रबसुमहोदयोत्तरं भारतस्य भौतिकविज्ञानं तत्रैव स्थगितमस्ति । वयम् अनुसन्धानविषये भाषामहे । प्राथमिकभौतिकशास्त्रे कुत्र अनुसन्धानं भवति ? जगदीशचन्द्रबसुः एकः भौतिकवैज्ञानिकः आसीत् तेन वृक्षेषु जीवः अस्ति, प्राणः अस्तीति सिद्धान्तितम् । अन्तःशास्त्रीयमनुसन्धानम् इत्यस्याद्य चर्चा कुर्मः । शतं वर्षेभ्यः प्राक् वनस्पतिविज्ञानस्यविषयःभौतिकशास्त्रज्ञजनेन साधितः । यतो हि ''समग्रे जडे चेतने च एक एव प्राणः प्रवहति'' एतदौपनिषदं सत्यं वैज्ञानिकाधारेण साधयितुं तैः स्वजीवनं समर्पितम् । ते तत्रैव न स्थगितवन्तः । तेषामग्रिमप्रयोगः धातूनां विषये आसीत् । ते धातुषु अपि प्राणः अस्तीति साधयितुं प्रवृत्ताः आसन् । जगदीशचन्द्रबसुमहोदयस्य धातुश्रान्तिः (Metal fatigue) अद्यापि उपयुज्यते । अद्यापि तद्गणनं भवति यत् कियन्तं कालं लोहमिदं कार्यकरं भविष्यति कदा वा अनुपयुक्तम् इति । यदि चेतना नाऽस्ति, प्राणः नाऽस्ति तर्हि आयासः कुतः अग्रे श्रान्तः भविष्यति। तैःलोहस्य उपरिं'साइनाइड' इत्यस्य प्रयोगः कृतः। तैः उक्तमासीत् यत् धातुः, विषस्य प्रयोगं जानाति तथा ज्ञात्वा एजते च इति। लंदनगरस्थरॉयलसोसायटीमध्ये एतस्य प्रयोगः सञ्जातः

बसुमहोदयेन एव स प्रस्तुतः।अद्य शताधिकवर्षाणि एतस्यघटनाविषयस्य सञ्जातानि।

अद्यावधि भारतीयभौतिकशास्त्रज्ञैः तदग्रे प्रगतिः न कृता ।धातुषु प्राणाः सन्ति तदग्रे प्राषाणेषु, मृत्तिकायां, कणे कणे च ।विद्युदणुः, प्राणुः (इलेक्ट्रॉन प्रोटॉन) इत्यनयोः मध्ये विद्यमानायां रिक्तिकायामपि प्राणाः सन्ति। एतत् यावत्पर्यन्तं भौतिकशास्त्रद्वारा न सिद्धं भविष्यति तावत्पर्यन्तं कल्पनाः तथा समस्याः न समाप्तिमेष्यन्ति।

एतत् मौलिकं संशोधनं न कृतम्, इत्यतः स्थपतेः पुल्लिङ्गस्त्रीलिङ्गादिग्राहकं स्थापत्यशास्त्रं (Architecture) अस्माकं बुद्धौ न प्रविशति ।यतो हि प्राणविद्यामधिकृत्य अनुसन्धानं न जायमानमस्ति ।प्राणः व्यक्ताऽव्यक्तयोः संयोजकमेकं तत्त्वं वर्तते । शरीरमनसोः संयोजकः प्राणः ।न केवलमन्तः अपितु बहिरपि प्राण एव जडस्याचेतनस्य च जगदन्तः स्थितं, चेतनेन सह तत्संयोजकं तत्त्वं आइंस्टीन तथा निकोलाटेस्ला इत्यादिभिः शोधे कृतेऽपि अप्राप्तं यत् तत् प्राणतत्त्वमेव, प्रश्नोपनिषदि तथा छान्दोग्योपनिषदिच तत् प्रोक्तं वर्तते। भौतिकशास्त्रं यावत्पर्यन्तं तत्संशोध्य न दर्शयिष्यति, तावत्पर्यन्तं प्रकृतिप्रेमीभौतिकशास्त्रं न सेत्स्यति ।अतः यद् भारतस्य भविष्यकालस्य कृते अत्यन्तमुपयुक्तं तन्मात्रं गृह्यतामन्यत् त्यज्यताम्।अतः अस्माभिः सर्वैः एकं व्रतं स्वीकृत्य कार्यं कर्तव्यम् ।

डॉ. राजेश बिनिवाले[12] महोदयानामेकः अतीव प्रियशब्दः वर्तते। यस्य ते सर्वत्र अभिव्यक्तिषु प्रयोगं कुर्वन्ति।मिशन् मोड – मिशन् मोड इति एकं व्रतं, अस्माकं निकटे तद् व्रतम् इत्याख्यातम् ।



डॉ. गौरवत्रिवेदिना उक्तम् ''एतादृशाः ग्रन्थाः प्रकाशिताः भवेयुः।''

तदैव जितेन्द्रवर्याः उक्तवन्तः ''लिखन्तु।''

''यः वदति स एव उद्घाटयेत् ।'' इति सूत्रम् ।

यः अत्र भाषते तत्कण्ठे एव मालार्पणं भवति ।अतः सूचनामात्रं नेदमपि तु कार्यबिन्दवः इमे ।अतः अस्माभिः सर्वैः मिलित्वा एतद्विषये कार्यं कर्तव्यम् ।एकाकिना गौरवेण न ।भवितुमर्हति गौरवः तत् समन्वयं (coordinate) कुर्यात्, किन्तु अस्मासु कश्चित् चिन्तयेत् ''मदीयः विषयोऽयं समीचीनः, विषयममुं बालकानां कृते अहं लेखितुं प्रभवामीति।'' सर्वापेक्षया कठिनं बालकानां कृतेलेखनम्।विदुषां कृते लेखनम् अत्यन्तं सरलम् ।लिखन्तु तर्हि ।भारतीयशिक्षणमण्डलं प्रकाशयिष्यति तत् । अस्माकं गोगटे महोदयः[19] प्रकाशयितुं सन्नद्धाः सन्ति।पृष्ठतः पतिताः भवन्तिः ''प्रकाशितं कुर्वन्तु, कुर्वन्तु'' इति ।किन्तु अस्माभिः कार्यं कर्तव्यं भविष्यतीति ।अतः अत्रोक्तः एकैकोऽपि विषयः अस्माकं कृते कार्यबिंदुः। तदुपरि कार्यं कर्तव्यम् ।अद्य नोचेत् श्वः ।श्वः नाऽस्ति चेत् परश्वः । 20, 50, 100 वा वर्षेभ्यः परं मानविभ्यःतां उक्तविषयाणां कार्यं कर्तव्यं भविष्यति ।यावच्छीघ्रं तावत् समीचीनम् ।एतस्य अवकाशगवाक्षस्य पिधानात् पूर्वमेव कर्मरतैः भाव्यम् ।अस्माकं निकटे नाशयि तुं समय एव नाऽस्ति ।अद्य एव इदानीमेव यात्रा आरम्भणीया स्यात् ।तत्कालं, दूरदृष्टिक्षेपे विद्यमानाः योजनाः (Short term - long term planning action plan starts with action, let us take the next step) अग्रिमपादप्रक्षेपस्य मनसि संकल्पं कुर्वन्तु ।स्वबुद्धौ ''अग्रे मम व्रतं किं भविष्यति'' एतत् स्पष्टीकृत्य वनामतीतः गमिष्यामः।यदैतत् भविष्यति

श्री उमाशंकर पचौरी महोदयाः रामसेतुविषये वार्ता कृतवन्तः तस्यैव सेतोः वार्ता, चर्चा अत्र प्रचलति ।अयम् आधारः (फाउंडेशन) सेतुः भवेदेव।

प्राच्यपाश्चात्ययोर्मध्ये प्राचीनाधुनिकयोर्मध्ये, वयं यूयमिति कथयितुः मध्ये 'सर्वेषां' मध्ये There is no us and them for us because everything is one – ''आत्मवत् सर्वभूतेषु यः पश्यति स पश्यति'' इति कथयति अस्मत् संस्कृतिः ।अस्माकं कृते अन्यः न कोऽपि अस्ति । अतः युवानः बह्वः जनाः कथयन्ति ''पश्चिमे इत्थमस्ति, अस्माकम् इत्थमस्ति'' । तदाहं कथयामि कुत्र व्यत्ययः अस्ति । यावत्पर्यन्तं ''सः तथा अस्माकम् इत्थं'' तावत्पर्यन्तं असमत्वं न सिद्धमेव यतो हि भारते द्वितीयं न किञ्चिदस्ति । तदा एव खलु विवेकानन्दस्वामिनः शिकागोनगरं गत्वा ''भगिन्यः भ्रातरश्च'' इति वक्तुं शक्तवन्तः ।सर्वमस्माकमेवाऽस्ति ।अतः अस्माकं देशे अस्मदीयमिति उच्यते । तव भवतः इति व्यवहारः न। ये संघसम्बद्धाः कार्यकर्तारश्च तेषां भाषणे ''वयम्'' इति शब्दः भवति । मराठीभाषायाः प्रभावादपि भवितुमर्हति किन्तु समग्रदेशे दृष्टवानहं – इलाहाबादतः निर्गतः प्रचारकः वा भवतु तस्यापि भाषणे, वयमस्माकम् इत्याद्येव आगमिष्यति । कथयिष्यति च स, ''अस्माकम् इत्थमस्ति ।'' एतत् तव मम इत्यनयोः मध्ये अस्माभिः ''वयं'' इति सेतुनिर्माणं कार्यम् । वयमिति भावनां जागरयितुमेव अयम् अभ्यासवर्गः।

अस्मिन्नभ्यासवर्गे अस्माभिः यत् प्रपूर्य प्राप्तं तत् किञ्चित् सूचनात्मकम् एव इत्यहं न मन्ये ।तदहं कार्यबिन्दुत्वेन मन्ये ।सूचनादानं सरलं भवति ।अत एव स्वसंस्थासु सूचनां दातुं जनाः संकोचं प्राप्नुवन्ति।



मराठ्यामेकस्मिन्नाशीर्वादे उच्यते, ''उतु नको मातु नको। घेतला वसा टाकू नको'', इति। यद् व्रतं स्वीकृतं तन्न विस्मर्तव्यमिति ।कोऽपि राजा भवति चेत् गुरुः तमाशीर्वदति – त्वं ज्येष्ठः सञ्जातोऽसि ।एकस्मिन् गीते आगच्छति इन्द्रस्य सिंहासनं प्राप्य मदः त्याज्यः इति तु कठिनमेव इति ।

सिंहासने उपविष्टः चेत् सिंहासनाधीश्वरतामदे मत्तः व्रतं न विस्मरेत् । अतः पुनरुत्थानायानुसन्धानम् (Research for Resurgence foundation)[13] इति अस्माकम् एकैकस्यापि जीवनस्य व्रतं भवेदिति ।तद्व्रतार्थं वयं कार्यं करिष्यामः इति ।

कार्यं त्रिषु स्तरेषु विधेयं भविष्यति ।प्रथमः स्तरः साधना । साधनायाः साधनत्वेन अस्माभिरेव भवितव्यम् ।अद्यतनकाले साधनेन सह सम्यकतां संयोज्य संसाधनविषये चर्चा विधीयते ।आश्रयः (source) इत्यनेन सह प्रतिपत्रि (resource) अपेक्ष्यते अतः सर्वदास्माभिः कार्यं कर्तव्यं चेत्, कर्तव्यं स्यात् संसाधनसंयोजनम् इति।

न केवलमार्थिकानां संसाधनानां संयोजनमपि तु तदितरेषाम्। आर्थिकानां तु समाजे गत्त्वा विकासः संयोजनं वा कार्यम् ।अद्यतनकाले तत् स्पष्टरूपेणार्थिकविकरणम् (Crowed financial) उच्यते।भारते तु सहस्राधिकवर्षेभ्यः प्रचलति । सर्वेष्वपि आय–व्यय व्यवहारेषु धर्मादायस्य कृते शतस्यैकः अंशः पृथक् स्थाप्यते स्म एकनाथरानडे[14] महोदयैः एकैकरूप्यकम् अर्जयित्वा शिलास्मारकं निर्मापितम् ।

आर्थिकं संसाधनं स्यान्नाम, तदपेक्षया अधिकमहत्त्वपूर्णमस्ति एतद्देशस्य प्रतिभायाः एकस्मिन् मञ्चे आनयनम् । यदा

कस्मिंश्चिद्विषये प्रवीणतामावहति तदा स विशेषज्ञः भवति । यदा विशेषज्ञमपि अतिक्रमति तदा मूर्धन्य इति उच्यते । एवं सर्वेषु क्षेत्रेषु मूर्धन्याः विद्वांसः अस्मद्देशे नाल्पाः वर्तन्ते । किन्त्वेते मूर्धन्याः व्यक्तिगतस्तरे सन्ति, तेषा संयोजनं कार्यम् । एतेषां चरणग्रहणं कर्तव्यम् ।

''तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्वदर्शिनः ।।''

भगवद्गीतायामुक्तं –''गत्वा तेषां चरणग्रहणं कुर्वन्तु, सेवां कुर्वन्तु, सम्यक् प्रश्नान् पृच्छन्तु, ते आगमिष्यन्ति ।'' वयं सर्वे सन्नद्धाः स्मः । यस्मिन् कोणे कथयिष्यन्ति तस्मिन् कोणे गमिष्यामः ।'' यस्य कस्यापि पण्डितस्य वैज्ञानिकस्य वा चरणयोरुपविश्य ''भ्रातः त्वं सर्वापेक्षया उन्नतोऽसि वैज्ञानिकोऽसि, आगच्छ । त्वमस्माकं मार्गदर्शनं कुरु नूतनान् शूरान् निर्माय देहि, वैज्ञानिकान् देहि इति ब्रूमः ''सर्वान् संयोजयामः । न केवलं विज्ञानस्य अपि तु सामाजिकशास्त्रस्य, समाजस्य लोकस्य अध्येतारः अपि पण्डिताः लभ्येरन् । पीएच्.डी. धारकः जन एव भवेदिति न आवश्यकता । अरुणाचलप्रान्ते बहवः वृद्धाः स्युः येषां स्वीया अनुभूतिः वर्तते । तान् गृहीत्वा आदिलेखनिर्माणं (document) कर्तव्यं भविष्यति । तेषां चरणयोः उपवेष्टुमस्मत् युवानः अभ्यासकाः सन्नद्धाः सन्ति । अतः एव युवा आयामम्[15] संयोजनं क्रियते । बौद्धिकानां भौतिकानाञ्च संसाधनानां संयोजनं कर्तव्यं भविष्यति न केवलं संयोजनेन चलिष्यति अपितु तस्मिन् लीनता सम्पादनीया स्यात् । स्वयमेव तस्याधारभूतः भवेत् । इयं सर्वापेक्षयाऽधिक्येन स्थिता आवश्यकता ।



अर्जुनं प्रति भगवता श्रीकृष्णेन अत्यन्तं सुन्दरं वाक्यमुक्तम् – ''यदि व्रतं स्वीकृतं तर्हि व्रतार्थं स्वसर्वस्वं समर्पय'' इति । सर्वस्वसमर्पणं सरलं वर्तते तदग्रिमः विचारोऽपि रमणीयतरः वर्तते ।

''यदि व्रतपूर्णतायै योग्यता अपेक्षेत, सा च त्वन्निकटे नाऽस्ति, तर्हि अर्जुनोभूत्वा समर्पणं कुरू'' इति ।

विवेकानंद–इंटरनेशनल–फाऊंडेशन संपर्कात् पूर्वं वयं केवलं वाचालाः एव आस्म । लेखनकौशल्यं नैव आसीत् । किन्तु तत्रोक्तं – विचारनिपानम् (Think Tank) । उक्तं ''लेखनं कार्यम्'' । तद्दिनं वर्तते 2008 वत्सरस्य, तद्दिनादारभ्य अद्यावधि प्रत्यहं हिन्द्यां, आंग्लभाषायाञ्च एकैकं पत्रं लिखामि । स्वाभ्यासार्थं न तु प्रकाशनार्थम् । प्रकाशितमपि बहु भवति सा अन्या कथा । किन्तु अप्रकाशितमपि मत्सविधे बहु अस्ति । चौर्यमपि जातम्, एकं लघुसङ्गणकम् (Laptop) इत्यनेन सह निर्गतम् । न काऽपि क्षतिः, बुद्धौ तु वर्तते एव । तत् कुत्र गमिष्यति । प्रत्यहं लेखनाभ्यासं कुर्वन्तु । योग्यता नाऽस्ति चेत् योग्यतां सम्पाद्य समर्पयिष्यामः । तदा स्वेनैव संसाधनसृष्टिः (Create) कर्तव्या भविष्यति संयोजनं (Mobilize) करणीयं भविष्यति । स्वस्य निर्मितिः, अन्यस्य निर्मितिः, संयोजनञ्च एतत् कार्यत्रयं करिष्यामः वयमिति व्रतं स्वीकुर्मः ।

इतः वयं पुनरुत्थानस्य कार्यकर्तारोऽपि भवामः । रामसेतोः हनुमन्तादिसेवकाः भवामः । बहुविचित्रं वाक्यप्रयोगमिमम् अनुभवामः । अस्मिन् वाक्ये पत्रकाराणां कृते मुख्यवृत्तं लभ्यते । बजरंगी भवनाय अङ्गणम् (बजरंगी बनने का अड्डा) एतत्प्रकारकः साम्प्रदायिकः विचारोऽपि कर्तुं शक्यः किन्तु यद् भावः (spirit), येन विचारेण